त्वमतोऽवधातुं न शक्यते, यतोऽन्यथाऽपि व्यवहाराः शक्यन्ते कर्तुं विचित्राति-(भि?)सन्धित्वात्पुरुषाणाम्, तेन हेतोः संदिग्धासिद्धतेत्येतदाशङ्क्याह—**आभिप्रायिकमित्यादि** ।

**आभिप्रायिकमेतेषां स्याद्वादादिवचो यदि ।**
**तात्त्विकं सर्ववस्तूनां किमेभी रूपमिष्यते ॥ ३३३१ ॥**

यदि ह्यन्याभिप्रायेण तैरेतत्स्याद्वादादिप्रमाणविरुद्धमित्यु(मप्यु?)क्तमित्यभिधीयते । अभिधीयताम्, नह्यस्माभिः स्वातन्त्र्येण वर्द्धमानादीनामसर्वज्ञत्वं साधयितुमिष्टम्, किंतु भवता परस्परविरुद्धमतावस्थितेन कपिलादिषु यदि सुगतः सर्वज्ञस्तदा कपिलो नेति का प्रमेत्युक्तम्, अत्रास्माभिः प्रमाणं भवन्मत्या तेषां मतभेदमङ्गीकृत्याभिधीयते, तेन नासिद्धता हेतोः । तथाहि यद्येषामाभिप्रायिकं वचो वर्ण्यते तदा किमेषां पारमार्थिकं वस्तुरूपमिष्टमिति वक्तव्यम् ॥ ३३३१ ॥

परं (एवं?) पृष्टः सन्पर आह—**अनात्मक्षणिकत्वादीति** ।

**अनात्मक्षणिकत्वादि यद्येवं सर्वदर्शिनः ।**
**साक्षात्समस्तवस्तूनां तत्त्वरूपस्य दर्शनात् ॥ ३३३२ ॥**
**सन्तु तेपि समस्तानामैकमत्येन संस्थितेः ।**
**परस्परविरुद्धार्थं नीतार्थं न हि ते जगुः ॥ ३३३३ ॥**

यदि सात्मादीनि ब्रूयात्तदा मतभेद एवोक्तः स्यादिति नासिद्धता भवेत् । **यद्येवमित्यादिनोत्तरमाह**—नह्यस्माभिः शृङ्गग्राहिकयाऽयमसौ सर्वज्ञ इत्येवं साधयितुमिष्टः, किंतु सामान्येन । यदि कपिलादीनामेवंविधतत्त्वपरिज्ञानमभ्युपगम्यते न तर्हि भवता वक्तव्यम् 'मतभेदः कथं तयो'रिति, सर्वेषामैकमत्येन स्थितत्वात् । यस्तु परस्परविरुद्धार्थोपदेशस्तेषां स नेयार्थतया व्यवतिष्ठते । नह्यैकमत्येन स्थिताः परस्परविरुद्धं नीतार्थं—तात्त्विकं रूपं गदन्तीति युक्तम् । तस्मान्मतभेदमिच्छताना(मा?)भिप्रायिकं वचो वाच्यम्, एषां मतभेदाभ्युपगमे च न वक्तव्यम्—'को नामैको निरूप्यता'मिति, यतः सुगत एव यथोक्तज्ञानयोगितया सर्वज्ञत्वेनावधार्यते नान्य इति निरूपितमेतत् ॥ ३३३२ ॥ ३३३३ ॥

किंच कपिलादीनां यथोक्तज्ञानाभ्युपगमे सुगतत्वमेवापद्यत इत्येतद्दर्शयन्नाह—**प्रतिपादितरूपस्येत्यादि** ।

**प्रतिपादितरूपस्य सर्ववस्तुगतस्य च ।**
**साक्षात्तत्त्वस्य विज्ञानात्सुगताः सर्वदर्शिनः ॥ ३३३४ ॥**
**तेषां चैवंविधे ज्ञाने सुगतत्वं न भिद्यते ।**
**प्रशस्तज्ञानयोगित्वादेतावत्तस्य लक्षणम् ॥ ३३३५ ॥**

प्रतिपादितं प्रसाधितं प्रमाणतो रूपं स्वभावो यस्यानात्मादिलक्षणस्य तत्त्वस्य तत्तथोक्तम् । **तेषा**मिति । वर्द्धमानादीनाम् । **एताव**दिति । प्रशस्तज्ञानयोगित्वम् । **तस्ये**ति । सुगतत्वस्य । यतो नैरात्म्यज्ञानात्प्रशस्तं समस्तज्ञेयाद्यावरणप्रहाणं गत इति सुगत उच्यते ॥ ३३३४ ॥ ३३३५ ॥

किञ्च—सामान्येनापि सर्वज्ञसम्भवे साध्यमाने भगवत्येवावतिष्ठते सामर्थ्यादिति दर्शयति—**तत्सम्भव्यपी**त्यादि ।

**तत्सम्भव्यपि सर्वज्ञः सामान्येन प्रसाधितः ।**
**तल्लक्षणाविनाभावात्सुगतो व्यवतिष्ठते ॥ ३३३६ ॥**

**त**दिति । तस्मात् । **लक्षणाविनाभावा**दिति । सर्वज्ञलक्षणाविनाभावात् ३३३६

ननु विशेषनिर्देशमन्तरेण कथमसौ लभ्यत इत्याह—**अनिर्दिष्टविशेषोऽपी**त्यादि ।

**अनिर्दिष्टविशेषोऽपि सर्वज्ञः कोऽपि सम्भवेत् ।**
**यो यथावत् जगत्सर्वं वेत्त्यनात्मादिरूपतः ॥ ३३३७ ॥**

यो हि सर्वं जगदनात्मादिरूपेण यथावदवगच्छति स सर्वज्ञ इत्येवं सामान्येन कृतेऽपि सर्वज्ञलक्षणे यत्र तदुपलभ्यते स सामर्थ्याद्विशेषोऽवगम्यत एवेति विशेषोपादानमनर्थकम्, एतच्च सर्वज्ञलक्षणं भगवत्येवोपलभ्यते नान्यत्र, विचित्रैरुपायैरविकलचतुःसत्यलक्षणसाभ्युपायहेयोपादेयतत्त्वप्रकाशनादिति भावः । नह्यविदितं वस्तु तथाभावैस्तथावत्तदविपरीतमविकलमुपदेष्टुं शक्यते । यथोक्तम्—"परोक्षोपेयतद्धेतोस्तदाख्यानं हि दुष्करम्" इति ॥ ३३३७ ॥

स्यादेतद्यदि नामानात्मादिरूपतो जगद्विदितमस्य तथापि कथमसौ सर्वज्ञः सिद्ध्यतीत्याह—**प्रत्यक्षीकृतनैरात्म्य** इत्यादि ।

**प्रत्यक्षीकृतनैरात्म्ये न दोषो लभते स्थितिम् ।**
**तद्विरुद्धतया दीप्रे प्रदीपे तिमिरं यथा ॥ ३३३८ ॥**

क्लेशज्ञेयावरणप्रहाणतो हि सर्वज्ञत्वम्, तत्र क्लेशा एव रागादयो भूतदर्शनप्रति-

बन्धा(न्ध?)भावात्क्लेशावरणमुच्यन्ते, दृष्टस्यापि हेयोपादेयतत्त्वस्य यत्सर्वाकारापरिज्ञानं प्रतिपादनासामर्थ्यं च ज्ञेयावरणम् । तत्र क्लेशावरणस्य नैरात्म्यप्रत्यक्षीकरणात्प्रहाणिः । ज्ञेयावरणस्य तु तस्यैव नैरात्म्यदर्शनस्य सादरनिरन्तरदीर्घकालाभ्यासात् । तथाह्यमी रागादयः क्लेशा वितथात्मदर्शनमूलका अन्वयव्यतिरेकाभ्यां निश्चिताः, न बाह्यार्थबलभाविनः । यतः सत्यपि बाह्यार्थे नायोनिसौमनच्छा(स्का?)रमन्तरेणोत्पद्यन्ते । विनापि चार्थेनायोनिसौविकल्पसंमुखीभावे समुत्पद्यन्ते । नच स(य?)त्सदसत्तानुविधायि यन्न भवति तत्तत्कारणं युक्तमतिप्रसङ्गात् । नाप्येते परपरिकल्पितात्मसमवायिनः, तस्यात्मनो निरस्तत्वात् । सत्यपि वा तस्मिन्नित्यं रागादीनामुत्पत्त्यनपायप्रसङ्गात् । उत्पत्तिस्थितिकारणस्याविकलस्यात्मनः सर्वदा सन्निहितत्वात् । परैरनाधेयातिशयस्य तदपेक्षानुपपत्तेश्चेति बहुधा चर्चितमेतत् । सदसतोश्चाश्रयणनिषेधादयुक्तमेषां कचित्समवायित्वमित्यतो न नित्यहेतुप्रतिबद्धात्मस्थितयः । नापि बाह्यार्थबलभाविनः । किंत्वभूतात्मदर्शनबलसमुद्भाविनः, तथाह्यहमित्यपश्यतो नात्मस्नेहो जायते, नापि ममेत्यगृह्णत आत्मसुखोत्पादानुकूलत्वेनागृहीते वस्तुन्यात्मीयत्वेनाभिष्वङ्गः समुद्भवति । द्वेषोऽपि नहि कचिदसक्तस्यात्मात्मीयप्रतिकूलत्वेनागृहीते वस्तुनि प्रादुर्भावमासादयति । आत्मीयानुपरोधिनि तदुपरोधप्रतिघातिनि च तस्यासम्भवात् । एवं नामादयोऽपि वाच्याः । तस्मादनादिकालीनं पूर्वपूर्वसजातीयाभ्यासजनितमात्मदर्शनमात्मीयग्रहं प्रसूते, तौ चात्मीयस्नेहम्, सोऽपि द्वेषादिकमित्यन्वयव्यतिरेकाभ्यामात्मग्रहादात्मात्मीयग्रहमूलत्वमेषां स्फुटतरमागोपालाङ्गनमवसितमेव । आत्मदर्शनविरुद्धं च नैरात्म्यदर्शनम्, तद्विपरीताकारालम्बनत्वात् । अनयोर्हि युगपदेकस्मिन् सन्ताने रज्जुसर्पतज्ज्ञानयोरिव सहावस्थानमैक्यं च विरुद्धम् । अतो नैरात्म्यदर्शनस्यात्मदर्शनविरोधात्तन्मूलैरपि रागादिभिः सह विरोधो भवति, दहनविशेषे(णे)व शीतकृतरोमहर्षादिविशेषस्य । तेन सर्वदोषविरोधिनैरात्म्यदर्शने प्रत्यक्षीकृते सति न तद्विरुद्धो रागादिदोषगणोऽवस्थानं लभते तिमिरवदालोकपरिगते देश इत्यतो नैरात्म्यदर्शनात्क्लेशावरणप्रहाणं भवति । प्रयोगः —यत्र यद्विरुद्धवस्तुसमवधानं न तत्र तदपरमवस्थितिमासादयति, यथा दीप्रप्रदीपप्रभाप्रसरसंसर्गिणि धरणितले तिमिरम्, अस्ति च दोषगणविरुद्धनैरात्म्यदर्शनसमवधानं प्रत्यक्षीकृतनैरात्म्यदर्शने पुंसीति विरुद्धोपलब्धिः ।

स्यादेतत्—यथा नैरात्म्यदर्शनसमाक्रान्ते चेतसि विरुद्धतयाऽऽत्मदर्शनस्योत्प-

तुमनवकाशस्तथा नैरात्म्यदर्शनस्याप्यात्मदर्शनसमाक्रान्ते मनसि, विरोधस्य तुल्यत्वात्, ततश्च कस्यचिन्नैरात्म्यदर्शनस्यासम्भवादसिद्धो हेतुः । सम्भवतु वा न वा नैरात्म्यदर्शनम्, तथाऽप्यनयोर्विरोधे सत्यपि नात्यन्तं बाध्यबाधकभावः सिद्ध्यति, यथा रागद्वेषयोः सुखदुःखयोर्वा । यतोऽत्यन्तप्रहाणमिह साधयितुमिष्टम् । ननु तावत्कालासमुदाचारमात्रमित्यतोऽनैकान्तिकता हेतोः । दृश्यतेऽपि सतामखण्डितमहिमानो रागादयः समुदयमासादयन्त इत्यतोऽपि हेतोर्नैकान्तिकतेति । नैतदस्ति । यदि नैरात्म्यविकल्पस्योत्पादोऽप्रहाणक्लेशस्य सन्ताने न संभवेत्तदा न सम्भवेन्नैरात्म्यदर्शनोदयावकाशः, यावताऽनुभवसिद्धस्तावन्नैरात्म्यविकल्पसंमुखीभावः सर्वेषामेव । स एव च भावनया कामिनीविकल्पवत्प्रकर्षगमनसम्भवादन्ते स्फुटप्रतिभासतया प्रमाणप्रतीतार्थग्राहितया च प्रत्यक्षतामापद्यत इति कथं नैरात्म्यदर्शनोदयासम्भवः । अपि च—यथाऽन्धकारपरिगते देशे कालान्तरेण प्रकाशोदयावकाशसम्भवस्तथेहापि किं न सम्भाव्यते । नचाप्येवं शक्यं वक्तुम्—सैव तादृशी भावना न कस्यचित्सम्भवति, या तथाभूतप्रत्यक्षज्ञानफला भवेदिति । यतोऽसम्भवे कारणं वचनीयम् । तथाहि—भावनायामप्रयोगे सर्वेषामेवानर्थित्वं वा कारणं भवेत् ?, प्रेक्षावतः प्रवृत्तेरर्थितया व्याप्तत्वात् । सत्यप्यर्थित्वे प्रहेयस्वरूपापरिज्ञानाद्वा न प्रवर्त्तते प्रेक्षावान् ?, अनिर्ज्ञातस्वरूपस्य दोषस्य हातुमशक्यत्वात् । सत्यपि तत्स्वरूपज्ञाने नित्यत्वं वा दोषाणां पश्यंस्तत्प्रहाणाय न यत्नमारभते ?, नित्यस्य प्रहाणासम्भवात् । असत्यपि वा नित्यत्वनिर्हेतुकत्वमेषामवगम्य निवर्त्तते ?, स्वतश्चस्यासंभवदुच्छेदत्वात् । सत्यपि वा कारणवत्त्वे तत्कारणस्वरूपानिश्चयादपि नाद्रियते भावनायाम् ?, अपि(वि?)ज्ञातनिदानस्य व्याधिरिव प्रहातुमशक्यत्वात् । भवतु वा तत्कारणपरिज्ञानं किं तत्कारणं नित्यमवगम्य नोत्सहते तत्प्रहाणाय प्रेक्षापूर्वकारी ?, अविकलकारणस्य प्रतिबद्धुमशक्तेः । अनित्यत्वेऽपि वा तत्कारणस्य दोषाणां प्राणिधर्मतामवेत्य न प्रयतते ?, स्वभावस्य हातुमशक्यत्वात् । अस्वभावत्वे वा दोषाणां क्षयोपायासम्भवान्निवर्त्तते ?, नह्युपायविकलस्योपेयसंप्राप्तिरस्ति । सत्त्वेऽपि चोपायस्य तदपरिज्ञानादसंभवत्तदनुष्ठानो भवेत् ?, अपरिज्ञातस्वरूपस्यानुष्ठानासम्भवात् । परिज्ञानेऽपि वा लङ्घनादिव व्यवस्थितोत्कर्षतया जन्मान्तरासम्भवेन वा भावनाया अत्यन्तप्रकर्षमसम्भावयन्नाभियोगवान्भवति ? । भवतु वाऽत्यन्तप्रकर्षगमनसम्भवात्प्रतिपक्षोदयेन दोषाणां क्षयः, तथापि ताम्रादिकाठिन्यवत्पुनरपि दोषोदयं सम्भा-

प्रयत्नाभियोगमारभत इति ? । तत्र न तावदनर्थित्वं सिद्धम् । तथाहि—ये तावच्छ्रा-
वकादिदुःखोत्पीडितमानसाः संसारादुत्त्रस्तमनसस्तदुपशममात्मनः प्रार्थयन्ते, तेषां
श्रावकादिबोधनियतानां संसाराद्भयमेव नैरात्म्यभावनार्थित्वनिमित्तम् । ये तु गोत्र-
विशेषात्प्रकृत्यैव परहितकरणैकाभिरामाः संस्कारादिदुःखत्रितयपरिपीडितं जगद-
वेक्ष्य कृपापरतन्त्रतया तद्दुःखदुःखिनः स्वात्मनि व्यपेक्षामपास्य सकलानेव संसा-
रिण आत्मत्वेनाभ्युपगतास्तत्परित्राणाय प्रणिदधते तेषां करुणैव भावनाप्रवृत्तिनिमि-
त्तम्, परोक्षोपेयतद्धेतोस्तदाख्यानस्य दुष्करत्वात् । परहितकरणेन प्रेक्षावतः किं
प्रयोजनमिति चेन्न । तदेव प्रयोजनमिष्टलक्षणत्वात्तस्य । नचाप्रेक्षावत्त्वप्रसङ्गः ।
परिकल्पितात्मग्रहनिबन्धनत्वादात्महितकरणाभिनिवेशस्य सकलसाधुजनसंमतत्वात्,
स्वफलानुबन्धित्वाच्च परहितकरणस्य । अपि च भावनाप्रवृत्तावर्थित्वासम्भवोऽत्र
प्रतिपादयितुमारब्धः, तद्यदि नामाप्रेक्षावत्त्वं तस्य भवेत्किमियता प्रवृत्तावनर्थित्वं
तस्य स्यात् । तस्मादिदमेव वक्तव्यम्—परहितकरणाय नैव कश्चित्प्रवर्त्तते प्रयोज-
नाभावादिति, तत्र चोक्तम् । अपि च—यथा केचिदुपलभ्यन्तेऽतितरामभ्यस्त-
नैर्घृण्या अकारणमेव परव्यसनाभिरामाः परदुःखसुखिनस्तथा केचिदभ्यस्तकारुण्याः
परसुखाभिरामाः परदुःखदुःखिनः प्रयोजनान्तरमन्तरेणापि भवन्तीति किं न सम्भा-
व्यम् । नापि दोषस्वरूपापरिज्ञानम्, यतोऽभिष्वङ्गपरिघातात्मात्मीयोन्नत्याद्याकारेण
रागद्वेषमोहमानमदेर्ष्यामात्सर्यादयः क्लेशोपक्लेशगणा विदितस्वरूपा एवोदयन्ते व्य-
यन्ते च । नापि च ते नित्याः, कादाचित्कतया संवेद्यमानत्वात् । अतएव नाहेतुक-
त्वमेषाम्, अहेतोरनपेक्षितत्वेन देशकालस्वभावनियमायोगात् । अतोऽपि नित्यहेतु-
त्वमेषां प्रतिक्षिप्तम्, तत्कारणस्यात्मादेः सदा सन्निहितत्वादनाधेयातिशयस्य परैः
सहकारिनिरपेक्षत्वात् । तन्मात्रभाविनां सर्वदा युगपन्नो(त्पो?)त्पत्तिप्रसङ्गात् । अतः
सामर्थ्यादनित्यहेतव एवैते । अनित्योऽपि हेतुरेषां विदितस्वरूप एव, आत्मात्मीय-
विपर्यासहेतुकत्वाद्रागादेर्दोषगणस्य तदन्वयव्यतिरेकानुविधानादिति पूर्वं प्रतिपादित-
त्वात् । नापि प्राणिधर्मत्वमेषां तस्यैव धर्मिणोऽसिद्धेः, न हि प्राणी नाम धर्मी विद्यते
कश्चित्, यस्यामी रागादयो धर्मा भवेयुः । केवलमिदम्प्रत्ययतामात्रमिदं विकल्पस-
मारोपितत्वाद्धर्मधर्मिव्यवहारस्य । अथ चित्तस्वभावत्वेन तत्रोत्पत्त्या वा प्राणिधर्म-
त्वमेषाम्, तथाऽप्यसिद्धिरनैकान्तिकश्च । तथाहि—विषयविषयिभावमिच्छता चित्तं
विषयग्रहणस्वभावमभ्युपेयम्, अन्यथा विषयज्ञानयोर्न विषयविषयिभावः । अर्थ-

ग्रहणस्वभावत्वेनाङ्गीक्रियमाणे यस्तस्य स्वभावस्तेनैवात्मनोऽशेषोऽर्थस्तेन गृह्यत इति वक्तव्यम् । अन्यथा कथमसौ गृहीतः स्यात् । यद्यसताऽऽकारेण गृह्येत ततश्च विषयविषयिभावो न स्यात् । तथाहि—यथा ज्ञानं विषयीकरोत्यर्थं न तथा सोऽर्थः, यथा सोऽर्थो न तथा तं विषयीकरोतीति निर्विषयाण्येव ज्ञानानि स्युः । ततश्च सर्वपदार्थासिद्धिप्रसङ्गः । तस्माद्भूतविषयाकारग्राहिताऽस्य स्वभावो निज इति स्थितम् । भूतश्च स्वभावो विषयस्य क्षणिकानात्मादिरूप इति प्रतिपादितमेतत् । तेन नैरात्म्यग्रहणस्वभावमेवेति तन्नात्मग्रहणस्वभावम् । यत्पुनरन्यथास्वभावोऽस्य स्यातिमूढानाश(मूढानांस?) सामर्थ्यादागन्तुकप्रत्ययबलादेवेत्यवतिष्ठते, न स्वभावत्वेन, यथा रज्ज्वां सर्पप्रत्ययस्य । अतएव क्लेशगणोऽत्यन्तसमुद्धतोऽपि नैरात्म्यदर्शनसामर्थ्यमस्योन्मूलयितुमसमर्थः । आगन्तुकप्रत्ययकृतत्वेनादृढत्वात् । नैरात्म्यज्ञानं तु स्वभावत्वात्प्रमाणसहायत्वाच्च बलवदिति तुल्येऽपि विरोधित्वे आत्मदर्शने प्रतिपक्षो व्यवस्थाप्यते । न चात्मदर्शनं तस्य तद्विपरीतत्वात् । यस्यापि न बाह्योऽर्थोऽस्तीति पक्षस्तस्यापि मते नैरात्म्यग्रहणस्वभावमेव ज्ञानं नात्मदर्शनात्मकम्, तस्यात्मनोऽसत्त्वात् । तथाहि—यदि नाम तेन विषयस्याभावात्तद्ग्रहणात्मकं ज्ञानं नेष्टम्, स्वसंवेदनात्मकं तु तदवश्यमङ्गीकर्त्तव्यम् । अन्यथा ज्ञानस्यापि व्यवस्था न स्यात् । स चात्मा विद्यमानेनैवानात्माद्वयादिरूपेण संवेद्यो नान्यथा, पूर्ववद्दोषप्रसङ्गात् । तस्मात्प्राणिधर्मत्वमेषामसिद्धम् । नापि तत्रोत्पद्यत इत्येतावता स्वभावत्वे परिकल्पिते प्रहाणासम्भवोऽनेकान्तात् । तथाहि—रज्ज्वां सर्पज्ञानमुत्पद्यते, अथ च तत्सम्यग्ज्ञानोत्पादान्निवर्त्तते । नापि क्षयोपायासम्भवः । स्वहेतुविरुद्धस्वभावपदार्थाभ्यासस्य क्षयोपायत्वेन सम्भवात् । तथाहि—ये सम्भवत्स्वहेतुविरुद्धस्वभावाभ्यासास्ते सम्भवदत्यन्तसन्तानविच्छेदाः, तद्यथा शीतादयः, तथा चामी रागादय इति सम्भवत्येवैषां क्षयोपायः । नापि तदपरिज्ञानम्, यतो हेतुस्वरूपज्ञानादेव यत्तद्विपरीतालम्बनाकारं वस्तु स तस्य प्रतिपक्ष इति स्फुटमवसीयत एव । नैरात्म्यदर्शनं च तत्र विपरीतालम्बनाकारत्वात्प्रतिपक्ष इति प्रदर्शितमेतत् । नापि लङ्घनादिवदव्यवस्थितोत्कर्षता । पूर्वपूर्वाभ्यासाहितस्य स्वभावत्वेनानपायादुत्तरोत्तरप्रयत्नस्यापूर्वविशेषाधानैकनिष्ठत्वात् । स्थिराश्रयत्वात् । पूर्वसजातीयबीजप्रभवत्वाच्च प्रज्ञादेर्नत्वेवं लङ्घनादिरिति पश्चात्प्रतिपादयिष्यते । नापि जन्मान्तरासम्भवः, पूर्वजन्मप्रबन्धस्य प्रसाधितत्वात् । नापि ताम्रादिकाठिन्यादिवत्पुनरुत्पत्तिसम्भवो दोषाणाम्,

तद्विरोधिनैरात्म्यदर्शनस्यात्यन्तसात्म्यमुपगतस्य सदाऽनपायात् । ताम्रादिकाठिन्यस्य हि यो विरोधी वह्निस्तस्य कादाचित्कसन्निहितत्वात्काठिन्यादेस्तदभाव एव भवतः पुनस्तदपायादुत्पत्तिर्युक्ता । नत्वेवं मलानाम् । अपायेऽपि वा मार्गस्य भस्मादिभिरनैकान्तान्नावश्यं पुनरुत्पत्तिसम्भवो दोषाणाम्, तथाहि—काष्ठादेरग्निसम्बन्धाद्भस्मसाद्भूतस्य तदपायेऽपि न प्राक्तनरूपानुवृत्तिः, तद्वद्दोषाणामपीत्यनैकान्तः । किञ्चागन्तुकतया प्रागप्यसमर्थानां मलानां पश्चात्सात्मीभूतं तन्नैरात्म्यं बाधितुं कुतः शक्तिः, नहि स्वभावो यत्नमन्तरेण निवर्त्तयितुं शक्यते । नच प्राप्यपरिहर्त्तव्ययोर्वस्तुनोर्गुणदोषदर्शनमन्तरेण प्रेक्षावतां हातुमुपादातुं वा प्रयत्नो युक्तः । नच विपक्षसा(नचाविपर्यस्ता ?)त्मनः पुरुषस्य दोषेषु गुणदर्शनं प्रतिपक्षे वा दोषदर्शनं सम्भवति, अविपर्यस्तत्वात् । नहि निर्दोषं वस्त्वविपर्यस्तधियो दुष्टत्वेनोपाददते, नापि दुष्टं गुणवत्त्वेन । नच नैरात्म्यदर्शनस्य कदाचिद्दुष्टता । सर्वोपद्रवरहितत्वेन गुणवत्त्वात् । तथाहि—निःशेषरागादिमलस्यापगमान्न भूतार्थदर्शननिबन्धोपद्रवः । नापि रागादिपर्यवस्थानकृतः कायचित्तपरिदाहोपद्रवोऽस्ति । नापि जन्मप्रतिबद्धो व्याधिजाद्युपद्रवः, जन्महेतोः क्लेशस्याभावात् । नापि साश्रवसुखोपभोगवद्वैरस्योपद्रवः, प्रशमसुखरसस्यैकान्ततयाऽनुद्वेगकरत्वात् । तन्नास्य हानाय यत्नो युक्तः । अपि तु यदि भवेदपरिहाणायैव भवेत् । बुद्धेः प्रकृत्या गुणपक्षपातात् । नापि दोषोपादानाय प्रयत्नः, तेषां सर्वोपद्रवास्पदत्वेन दुष्टत्वात् । तस्मात्सम्भविनी नैरात्म्याभावना । तस्याश्च प्रकर्षपर्यन्तगमनात्स्फुटप्रतिभासज्ञानफलत्वं दृष्टम् । यथा कामिनीं भावयतः कामातुरस्य । तथाहि तस्य सविभ्रमाः पश्याम्युपगूह इत्येवं वाचः कायव्यापाराश्चाभिप्रायानुरूपाः साक्षात्कारिनिबन्धनाः प्रवर्त्तन्ते । तस्मान्नासिद्धो हेतुः । नाप्यनैकान्तिकः, यतो नैरात्म्यदर्शनस्य भूतार्थविषयत्वेन बलवत्त्वमात्मदर्शनस्य तु विपर्ययाद्विपर्यय इति भवति विपक्षप्रतिपक्षभावः । रागद्वेषयोरप्यभूतात्मग्रहसंस्पर्शेन प्रवृत्तेर्न तयोर्विरुद्धरूपग्रहणनिमित्तो विपक्षप्रतिपक्षभावः । नापि विपर्यासात्, अविपर्यासकृतोर्द्वयोरपि विपर्यस्तत्वात् । नाप्यनयोर्विरोधः सिद्धः, द्वयोरप्यात्मग्रहैकयोनित्वात् कार्यकारणभावाच्च । तथाहि—सत्यात्मात्मीयाभिष्वङ्गे तदुपरोधिनि द्वेषो जायते नान्यथा । नचाभिन्नकारणयोः कार्यकारणभूतयोर्बाध्यबाधकभावो युक्तः, यथा वह्निधूमयोरेकेन्धनप्रभवयोः, यथा वात्मग्रहस्नेहयोः, अतिप्रसङ्गात् । युगपदनुत्पत्तिस्तु तदुपादानचित्तस्य युगपत्सजातीयचित्तद्वयाक्षेपासाम-

ध्यात् । नापि सुखदुःखयोः परस्परं विरोधः, तथाहि—द्विविधे सुखदुःखे मानसे विषयजे च । तत्र ये तावन्मानसे तयोर्द्वेषानुनयसंप्रयोगित्वाद्रागद्वेषाभ्यामेकयोगक्षेमतया तद्विपर्ययस्तत्त्वमभिन्नात्मरूपग्राहित्वमात्मग्रहैकयोनित्वं कार्यकारणभावश्चेति न परस्परं विरोधः संभवति । ये च विषयजे तयोरपि परस्परं कारणभेदाप्रतिनियमान्न विरोधः । तथाहि यत एव सुखमुत्पद्यते तत एवातिसेव्यमानाद्दुःखमपीति न तयोः कारणभेदप्रतिनियमोऽस्ति । नत्वेवं नैरात्म्यदर्शनस्येतरेण । किञ्च—द्वयोरप्यनयोर्विषयबलभावित्वेन तुल्यबलत्वम्, नतु मार्गदोषयोः, मार्गस्यैव भूतार्थविषयत्वेन बलवत्त्वात्, न दोषाणाम् । अपि(च)खलु सुखदुःखेऽचिरस्थितिके न तु पुनरेवं नैरात्म्यदर्शनम्, तस्य सात्मत्वेन सदाऽनपायादिति पूर्वमुक्तमतो न व्यभिचारः । युगपदनुत्पत्तेस्तु कारणमुक्तम् । यत्पुनरुक्तमनुमानबलावधारितनैरात्म्यानामपि समुत्पद्यन्ते रागादय इति, तदयुक्तम् । यस्माद्भावनामयं स्फुटप्रतिभासतया निरात्मकवस्तुसाक्षात्कारिज्ञानमविकल्पकं प्रमाणप्रसिद्धार्थविषयतया चाभ्रान्तं तन्नैरात्म्यदर्शनमात्मदर्शनस्यात्यन्तोन्मूलनेन प्रतिपक्षो वर्णितो न श्रुतचिन्तामयम् । यस्मादनादिकालाभ्यासादत्यन्तोपारूढमूलत्वान्मलानां क्रमेणैव विपक्षवृद्ध्याऽवह्रसतां क्षयः, नतु सकृच्छ्रवणेन । यथा शीतस्पर्शस्य वह्निरूपसंपर्कमात्रान्न क्षयः । नचापि श्रुतचिन्तामयनैरात्म्यज्ञानसंमुखीभावे सति रागादिसमुदयः सिद्धो येन व्यभिचारः स्यात् । तथाहि—समुत्पन्नं रागादिपर्यवस्थानमशुभादिमनस्कारबलेन विनोदयन्त्येव सौगताः । अतएवाखण्डितमहिमत्वमेषामसिद्धम् । विरोधोऽपि नैरात्म्यदर्शनेनैषामत एव व्यवस्थाप्यते । तत्संमुखीभावे सत्यपकर्षात् । ये हि यदुपधानादपकर्षधर्माणस्ते तदत्यन्तवृद्धौ निरन्वयसमुच्छित्तिधर्माणो भवन्ति, यथा सलिलावृद्धावग्निज्वाला, नैरात्म्यज्ञानोपधानाच्चापकर्षधर्माणो दोषा इति तदत्यन्तवृद्धौ कथमवस्थां लभेरन् । अतो नानैकान्तिकता हेतोः । सपक्षे भावाच्च न विरुद्धता ॥ ३३३८ ॥

एवं क्लेशावरणप्रहाणं प्रसाध्य ज्ञेयावरणप्रहाणं प्रतिपादयन्नाह—**साक्षात्कृतिविशेषादिति।**

**साक्षात्कृतिविशेषाच्च दोषो नास्ति सवासनः ।**
**सर्वज्ञत्वमतः सिद्धं सर्वावरणमुक्तितः ॥ ३३३९ ॥**

साक्षात्करणं कस्य ?, नैरात्म्यस्येति प्रकृतत्वाद्गम्यते । तस्याविशेषः—बहुशो बहुधोपायं(यैः?)कालेन बहुना सर्वाकारेण तत्र तद्विपक्षे च गुणदोषाणामत्यन्तप्रकाशीभावः । अत एव श्रावकादेर्नैरात्म्यदर्शनेऽपि न सर्वज्ञत्वम् । तथाविधान्तराभ्यासविशेषाभावेन ज्ञेयावरणस्याप्रहाणात् । प्रयोगः—या सादरनैरन्तर्यदीर्घकालविशेषणा भावना सा करतलायमानग्राह्यावभासमानज्ञानफला, तद्यथा कामातुरस्य कामिनीभावना, यथोक्तविशेषणत्रययुक्ता च सर्वाकारसर्वमतनैरात्म्यभावना कारुणिकस्येति स्वभावहेतुः । नचासिद्धो हेतुः, कारुणिकस्यार्थित्वेन तथा प्रवृत्तिसम्भवस्य प्रतिपादितत्वात् । नाप्यनैकान्तिकत्वम्, यतः सर्वधर्मगतनैरात्म्यालम्बनस्य मनोविज्ञानस्य धर्मिणो यथोक्तविशेषणत्रययुक्तभावनासंस्पृष्टत्वेन हेतुना स्फुटप्रतिभासित्वं साध्यम् । एतेन च साध्यधर्म्येण यथोक्तसाधनधर्मस्य व्याप्तिः सिद्धा । कारणान्तरानपेक्षित्वात्स्फुटप्रतिभासित्वस्य । ततश्च सामर्थ्यात्सर्वज्ञत्वेनापि व्याप्तिः सिद्धा । यस्मात्सर्ववस्तुगतनैरात्म्याद्यालम्बनस्य मनसो यत्स्फुटप्रतिभासित्वं तदेवास्य सर्वज्ञत्वं नान्यत् । तथाहि भाव्यमानवस्तुस्फुटप्रतिभासित्वेन भावनायाः सामान्येन व्याप्तौ सिद्धायां सामर्थ्यात्सर्वज्ञत्वेनापि सिद्धैव । यथोक्तधर्मिण्यन्यस्य स्फुटप्रतिभासित्वस्यासम्भवात् । एतेन ये सत्तासाधने दोषाः प्रोक्तास्ते प्रत्युक्ताः । सर्वज्ञसत्ताया असाध्यत्वात् । प्रसिद्धे मनसि धर्मिणः स्फुटप्रतिभासित्वस्य साध्यत्वात् । एवमनेन प्रकारेण प्रसिद्धात्साक्षात्कृतिविशेषात्कायवाग्बुद्धिवैगुण्यलक्षणाया दोषवासनायाः प्रहाणात्सिद्धमावरणद्वयप्रहाणम् । अतः सर्वावरणविमुक्त्या सिद्धं सर्वज्ञत्वम् ॥ ३३३९ ॥

स्यादेतद्यदि नाम सामान्येन सिद्धं सुगते तु न सिद्धमित्याह—एतच्चेत्यादि ।

**एतच्च सुगतस्येष्टमादौ नैरात्म्यकीर्त्तनात् ।**
**सर्वतीर्थकृतां तस्मात्स्थितो मूर्ध्नि तथागतः ॥ ३३४० ॥**

एतद्यथोक्तं सर्वज्ञत्वं सुगतस्यैवेष्टं—सिद्धम् । न कपिलादेः । कस्मात्?, आदौ नैरात्म्यकीर्त्तनात् । एतदुक्तं भवति । येनेदं सर्वपदार्थानां स्कन्धपञ्चकत्वादिदेशनया सर्वाकारमादौ प्रथमतो नैरात्म्यं कीर्त्तितम्, स एवादौ सर्वधर्माणां विचित्रप्रभेदनैरात्म्यकीर्तनात्कार्यलिङ्गात्सिद्धः पुरुषविशेषोऽस्माभिः सुगत इत्युच्यते । तस्यानया देशनया साभ्युपायहेयोपादेयतत्त्वस्थिराशेषज्ञानं साध्यते । (ते) न ज्ञान-

योगादेवासौ सर्वज्ञः प्रमाणभूतश्चेति तदुक्तप्रतिपत्तिकामैः साधयितुं युक्तः, नतु कीटसङ्ख्यादिज्ञानात् । किंतु कीटसङ्ख्यादावपि तस्य ज्ञानसम्भवः साध्यते । तत्त्वस्थिराशेषज्ञानं त्वाहत्य । तथाहि—प्रमाणसंवादिनैरात्म्यदेशनया तत्त्वज्ञानं यस्य सिद्धम्, तस्यैव नैरात्म्यस्य पूर्वापराव्याहतदेशनया स्थिरज्ञानम्, नवाङ्केऽपि शास्त्रप्रवचने प्रियान(नु?) विषयायामपि देशनायां दुःखादिलक्षणसत्यदेशनाया एकवाक्यत्वात् । विचित्रैश्चोपायैश्चतुःसत्यप्रकाशनादशेषज्ञानमस्यानुमीयते । शेषस्य सर्वाकारज्ञानप्रतिपादनासामर्थ्यलक्षणस्य प्रहाणात् । नह्यविदितसर्वाकारगुणदोषस्तत्प्रतिपादनाकुशलश्च तथा प्रतिपादयति । नापि वेदाद्विज्ञाय प्रतिपादयतीति युक्तम् । तस्य पौरुषेयत्वप्रतिपादनादिति भावः । अतोऽशेषतीर्थकरमूर्ध्नि भगवान्ज्ञानातिशययोगात्स्थित इति सिद्धम् ॥ ३३४० ॥

अतएव यथोक्तज्ञानातिशययोगिना भगवता सहान्येषां न तुल्यत्वमस्तीति दर्शयन्नाह—तेनेत्यादि ।

**तेन प्रमाणसंवादितत्त्वदर्शनयोगिना ।**
**न तुल्यहेतु(योग?)ताऽन्येषां विरुद्धार्थोपदेशिनाम् ३३४१**
**प्रमाणगोचरा येषां प्रमाबाधाकुलं वचः ।**
**तेषामत्यक्षविज्ञानशक्तियोगो हि दूरतः ॥ ३३४२ ॥**

नह्येषां ज्ञानातिशययोगिताप्रसाधकः कश्चिद्धेतुरस्ति । तथाहि—हेतुर्भवत् वचनाख्यमेव लिङ्गं भवेत् । तच्चैषां प्रमाणविरुद्धार्थप्रतिपादकमिति कथं ततो ज्ञानातिशययोगिताऽमीषां प्रतीयेत ॥ ३३४१ ॥ ३३४२ ॥

सुगतस्यापि वचनं प्रमाणविरुद्धमिति चेदाह—सम्बद्धेत्यादि ।

**सम्बद्धानुगुणोपायं पुरुषार्थाभिधायकम् ।**
**दृष्टेऽप्यर्थे प्रमाणाभ्यामीषदप्यप्रबाधितम् ॥ ३३४३ ॥**

सम्बद्धम्—वाक्यानामेकार्थोपसंहारेण परस्परं सङ्गतम्, नतु दशदाडिमादिवाक्यवत्परस्परासङ्गतम् । अनुगुणः—शक्यानुष्ठानतया नैरात्म्यभावनादिलक्षण उपायो यस्मिन्नुपदिष्टस्तत्तथोक्तम्, नतु विषप्रशमनाय तक्षकचूडारत्नालङ्कारोपदेशवदशक्योपायम् । पुरुषार्थः—अभ्युदयनिःश्रेयसलक्षणः, तस्याभिधायकम्, नतु काकदन्तपरीक्षावदपुरुषार्थफलम् । ननु चैतत्सर्वं कपिलादिवाक्येष्वप्यस्तीत्याह—दृष्टे-

ऽपीत्यादि । दृष्टे—प्रत्यक्षानुमानविषयत्वेनाभिप्रेते । प्रमाणाभ्याम्—प्रत्यक्षानुमानाभ्याम् । अबाधितं यथा निर्दिष्टस्यार्थस्य तथाभावात् । तथाहि—नीलादिसुखदुःखादिनिमित्तोद्ग्रहणरागादिबुद्धिलक्षणस्य स्कन्धपञ्चकस्य प्रत्यक्षत्वेनाभिमतस्य नान्यथात्वं सम्भवति, अप्रत्यक्षत्वेन चाभिमतानामप्रत्यक्षतेव । यथा परैः प्रत्यक्षाभिमतानां रूपशब्दादिसन्निवेशेनां सुखादीनां द्रव्यकर्मसामान्यसंयोगादीनां च । तथा—वस्तुबलप्रवृत्तानुमानविषयत्वेनाभिप्रेतानां तथा भाव एव । यथा चतुर्णामार्यसत्यानामतद्विषयत्वेनेष्टानां चातद्विषयत्वमेव । यथा परैर्वस्तुबलानुमानविषयत्वेनाभिमतानामात्मादीनाम् । अपिशब्दाददृष्टेऽपि न विक्रियेति दर्शितम् । तथाह्यत्र रागादिरूपं तत्प्रभवं वा धर्ममुद्दिश्य तत्प्रहाणाय तन्निदानात्मदर्शनविरोधेन नैरात्म्यदर्शनमेव प्रतिपक्षो देशितो नतु कपिलादिशास्त्रवत्तन्निदानाविरुद्धः स्नानाग्निहोत्रादिरुपदिष्टः ॥ ३३४३ ॥

अत एव विशुद्धसुवर्णवत्परीक्ष्य ग्राह्यमेतद्विचक्षणैरिति भगवतोक्तमित्येतत्सूचयन्नाह—तापादित्यादि ।

**तापाच्छेदान्निकषाद्वा कलधौतमिवामलम् ।**
**परीक्ष्यमाणं यन्नैव विक्रियां प्रतिपद्यते ॥ ३३४४ ॥**

यथा कलधौतं सुवर्णममलं सर्वदोषरहितं परीक्ष्यमाणं तापादिभिर्न विक्रियां प्रतिपद्यते तथा भगवद्वचोरत्नं प्रत्यक्षेण तापसदृशेन वस्तुबलप्रवृत्तानुमानेन निकषप्रख्येणागमापेक्षानुमानेनापि छेददृष्टान्तसूचितेन न विक्रियते । अतः प्रेक्षापूर्वकारिण एवम्भूतादेवागमात्प्रवृत्तिर्युक्ता नान्यत इत्यभिप्रायः ॥ ३३४४ ॥

रत्नसाधर्म्यमस्य दर्शयन्नाह—समस्तेत्यादि ।

**समस्तकुमतध्वान्तविध्वंसानुगुणोदयम् ।**
**तथागतवचोरत्नमलब्धंबहुकल्मषैः ॥ ३३४५ ॥**
**ततः सुगतमेवाहुः सर्वज्ञमतिशालिनः ।**
**प्रधानपुरुषार्थज्ञं तं चैवाहुर्भिषग्वरम् ॥ ३३४६ ॥**
**सुगतस्तेन सर्वज्ञः कपिलो नेति तु प्रमा ।**
**अनन्तरोदिता व्यक्ताऽप्येषा मूढैर्न लक्षिता ॥ ३३४७ ॥**

कुमतमेव ध्वान्तमन्धकारम्, तस्य विध्वंसो विनाशः, तस्मिन्ननुगुण उदयो

यस्य तत्तथोक्तम् । बहुकल्मषैरिति । अपुण्यवद्भिः । अनन्तरोदितेति । यथोक्तवचनाख्यकार्यलिङ्गजा ॥ ३३४५ ॥ ३३४६ ॥ ३३४७ ॥

गणिताद्येकदेशेष्वित्यादावाह—यथोदितान्तरादित्यादि ।

**यथोदितान्तरादेव विशेषोऽप्यवधार्यते ।**
**ऋषभादिकुतीर्थेभ्यः स्मरभङ्गविधायिनः ॥ ३३४८ ॥**

यथोक्तज्ञानातिशययोगाद्भगवतो मारजितो ऋषभवर्द्धमानादिभ्यो विशेषे सिद्धे सति न युक्तं सत्यवचसा भवता वक्तुम्—न विशेषोऽवधार्यत इति (इति) समुदायार्थः ॥ ३३४८ ॥

स्यादेतत्—गणिताद्येकदेशार्थेऽविसंवादादुभयेषामस्माभिरविशेष उच्यत इत्याह—को हीत्यादि ।

**को हि निःशेषशास्त्रार्थतत्त्वज्ञं मन्यते जडः ।**
**समानभोजनज्ञानान्मातृकामात्रवेदनात् ॥ ३३४९ ॥**

येनैव हेतुनेत्यादावाह—तद्येनेत्यादि ।

**तद्येन हेतुनैकस्य सर्वज्ञत्वं प्रसाध्यते ।**
**तद्धेतुवस्तुनोऽसत्त्वान्न सोऽन्यस्योपतिष्ठते ॥ ३३५० ॥**

तदिति । तस्मात् । तद्धेतुवस्तुन इति । यदि नाम शब्दमात्रमस्ति—स्याद्वादादीनामविपरीतार्थानां सर्वार्थव्यापिनामुपदेष्टृत्वादिति, तथाऽपि तस्य वस्तुप्रतिबद्धस्य हेतुवस्तुनो—हेत्वर्थस्याभावान्नासौ हेतुरन्यस्य कपिलादेरुपतिष्ठते, वस्त्वेव हि वस्तुप्रतिबद्धत्वाद्वस्तु गमयति, न शब्दमात्रम् ॥ ३३५० ॥

दूषणानीत्यादावाह—तद्दूषणानीत्यादि ।

**तद्दूषणान्यसंरम्भाः सर्वज्ञजिनशासने ।**
**शाक्या यानि वदन्त्येवं तान्यशक्ता दिगम्बराः ॥३३५१॥**

असंरम्भा इति । संरम्भरहिताः । कृपयैव परानुग्रहाय तेषां प्रवृत्तेर्न भवतामिव रोषमानादिभिः । एवमिति । तदुपदिष्टस्य स्याद्वादादेर्दुष्टत्वप्रतिपादनात्॥३३५१॥

तत्रानवस्थितैरित्यादावाह—यदित्यादि ।

**यत्सिद्धप्रतिबन्धेन प्रमाणेनोपपादितम् ।**
**तत्त्वं सौगतसिद्धान्ते सिद्धं नान्यमते तथा ॥ ३३५२ ॥**

**तेन व्यवस्थितैस्तेषां भिन्नैः साधनदूषणैः ।**
**प्रतिबिम्बोदयाग्रस्तैर्निर्णयः क्रियतामलम् ॥ ३३५३ ॥**

**यदिति** । यस्मात् । **सिद्धप्रतिबन्धेनेति** । वस्तुबलप्रवृत्तेर्न(नैः?) सिद्धतादात्म्य-तदुत्पत्तिलक्षणप्रतिबन्धेनेत्यर्थः । **तेनेति** । तस्मात् ॥ ३३५२ ॥ ३३५३ ॥

**यस्य ज्ञेये**त्यादावाह—**सर्वाकारज्ञतायास्त्वि**त्यादि ।

**सर्वाकारज्ञतायास्तु न कश्चिदपि विद्यते ।**
**साक्षादितरथा वाऽपि विरोधो ज्ञेयतादिभिः ॥ ३३५४ ॥**
**अज्ञेयत्वादिविश्लेषात् ज्ञेयत्वादि व्यवस्थितम् ।**
**न सर्वज्ञत्वविश्लेषात्तत्पुनः स्थितलक्षणम् ॥ ३३५५ ॥**

अर्थान्तरविधानेनार्थान्तरस्य निषेधं प्रतिपादयितुमिच्छता साक्षात्पारम्पर्येण वा विरुद्धस्यैव विधानात्प्रतिपादनीयो नाविरुद्धस्य, अन्यथा हि यस्य कस्यचिद्विधानेन सर्वस्य निषेधः स्यात् । नच सर्वज्ञत्वस्य ज्ञेयत्वादिभिः सह कश्चित्साक्षात्पारम्पर्येण वा विरोधोऽस्ति । तथाहि—द्विविध एव भावानां विरोधो निरूप्यमाणोऽवतिष्ठते, परस्परपरिहारस्थितलक्षणो वा—यथा भावाभावयोः क्रमाक्रमयोर्वा । सहानवस्था-नलक्षणो वा—यथाग्निशीतस्पर्शयोः । तत्राद्यस्तावज्ज्ञेयत्वादिभिः सह सर्वज्ञत्वस्य न सम्भवतीति दर्शयति—**अज्ञेयत्वा**दीत्यादि । यद्व्यवच्छेदनान्तरीयको यस्य परि-च्छेदस्तयोरेव परस्परपरिहारस्थितलक्षणो विरोध इति पूर्वमुक्तम् । न च ज्ञेयत्वादि सर्वज्ञत्वव्यवच्छेदेन स्थितम्, किं तर्हि ?, अज्ञेयत्वादिव्यवच्छेदेन ॥ ३३५४ ॥ ॥ ३३५५ ॥

नापि द्वितीयो विरोधः सम्भवतीति दर्शयन्नाह—**सर्वज्ञत्वमि**त्यादि ।

**सर्वज्ञत्वं नचाप्येतत्कचित्संपूर्णकारणम् ।**
**सत्त्वादिसम्भवे पश्चात्प्राक्प्रवृत्तं निवर्त्तते ॥ ३३५६ ॥**

यस्य ह्यविकलकारणस्य भवतो यत्सन्निधानादभावस्तयोरेव सहानवस्थानलक्षणो विरोधः, नचैतत्सर्वज्ञत्वमविकलकारणं प्राक्प्रवृत्तं दृष्टम्, येन पश्चात्सत्त्वादिसम्भवे सति निवर्त्तेत इति स्यात् ॥ ३३५६ ॥

कस्मान्न प्रवृत्तमित्याह—**नैःस्वाभाव्य** इत्यादि ।

**नैःस्वाभाव्योऽस्ववित्तौ च नहि तज्जातु जायते ।**
**प्राक्प्रवृत्तेः प्रसिद्धेयमेवं सर्वज्ञता भवेत् ॥ ३३५७ ॥**

यदि सर्वज्ञत्वं सत्त्वज्ञेयत्वसद्भावे सति निवर्त्तेत इति भवताऽभ्युपगम्यते । तथा च सति सत्त्वादिसन्निधानात्पूर्वमस्यासत्त्वमज्ञेयत्वं च स्वसंविदापीत्यभ्युपगतं भवेत्, ततश्चासत्त्वेन नैःस्वाभाव्ये सत्यज्ञेयत्वाचास्वविक्तौ सत्यां नैतत्सर्वज्ञत्वं जायते—भवतीति तत्कथं प्राक्प्रवृत्तं पश्चान्निवर्त्तेत इति स्यात् । नहि निःस्वभावस्योत्पत्तिः सम्भवति । नाप्यनुपलब्धस्य सत्ताव्यवस्थानिबन्धनमस्ति, ज्ञाननिबन्धनत्वाद्वस्तुसत्ताव्यवस्थायाः । तस्मात् स्ववचनव्याघात इत्यभिप्रायः । किंच यदि प्राक् प्रवृत्तिरस्याभ्युपगम्यते तदा प्रवृत्तेः प्रयत्नमन्तरेणैव सर्वज्ञता सिद्धा, अतो न तत्प्रतिक्षेपो युक्तः, अन्यथा स्ववचनव्याहतिः स्यादिति दर्शयन्नाह—**प्राक्प्रवृत्तेरि**त्यादि । प्राक्प्रवृत्तेः, सर्वज्ञत्वस्याभ्युपगमे सतीति शेषः ॥ ३३५७ ॥

अथापि स्यान्माभूद्विरुद्धं ज्ञेयत्वादि, तथापि सर्वज्ञासत्त्वं गमयतीत्याह ।

**नाविरुद्धविधाने च युक्तमन्यनिवर्त्तनम् ।**
**अन्यथा रूपसद्भावाद्रसाभावोऽपि गम्यते ॥ ३३५८ ॥**

यस्तु मन्यते—यद्यपि ज्ञेयत्वादयो न विरुद्ध्यन्ते सर्वज्ञत्वेन, वक्तृत्वं तु विरुध्यत एव, पारम्पर्येणैतत्कारणेन विकल्पेन सर्वज्ञत्वस्य सहानवस्थानात् । तथाहि—नावितर्क्य नाविचार्य वाचं भाषत इति न्यायाद्वचनस्य विकल्पो हेतुः, विकल्पानां च सर्वेषामभिलापसंसृष्टतया न वस्तुस्वरूपग्रहणमस्ति, तस्य निर्विकल्पज्ञानगोचरत्वात्, अतो विकल्पावस्थायां वस्तुस्वरूपपरिज्ञानाभावान्न सर्वज्ञत्वमस्तीति सिद्धाऽस्य वक्तृत्वस्य विपक्षात्सर्वज्ञत्वलक्षणात्कारणानुपलब्ध्या व्यतिरेकनिश्चितिरिति नानैकान्तिकता हेतोः । अयं च वक्तृत्वाख्यो हेतुः 'यस्य ज्ञेयप्रमेयत्ववस्तुसत्त्वादिलक्षणा' इत्यत्रादिशब्देनाक्षिप्त एवेति । तदेतत् **तदत्रादिपदाक्षिप्त** इत्यादिनाऽऽशङ्क्य **अत्रापि ये प्रवक्तृत्व**मित्यादिना परिहरति ।

**तदत्रादिपदाक्षिप्ते वक्तृत्वे योऽभिमन्यते ।**
**निश्चयं व्यतिरेकस्य परस्परविरोधतः ॥ ३३५९ ॥**
**विकल्पे सति वक्तृत्वं सर्वज्ञश्चाविकल्पतः ।**
**न ह्याविष्टाभिलापेन वस्तु ज्ञानेन गम्यते ॥ ३३६० ॥**
**अत्रापि ये प्रवक्तृत्वं वितर्कानुविधानतः ।**
**सर्वज्ञस्याभिमन्यन्ते न तैर्वचनसम्भवे ॥ ३३६१ ॥**

**सर्वज्ञ इष्यते नापि विकल्पज्ञानवृत्तिमान् ।**
**तस्मिन्क्षणे विकल्पे तु वक्तृत्वं न प्रसिद्ध्यति ॥ ३३६२ ॥**

केचिद्भगवतो वक्तृत्वं विकल्पसंमुखीभावादेवेति प्रतिपन्नाः, अन्ये तु पूर्वावेध-(श?)वशादेवाविकल्पयतोऽपि वचनप्रवृत्तिर्भगवत इति वर्णयन्ति । तत्र प्रथमे दर्शने यदि विकल्पावस्थायामसर्वज्ञत्वं साध्यते तदा सिद्धसाध्यता, इष्यत एव तैस्तस्याम-वस्थायां भगवतोऽसर्वदर्शित्वम् । अथाविकल्पावस्थायामसर्वज्ञत्वं भावयितुमिष्टम् । तदा हेतोरसिद्धता । नहि तस्यामवस्थायां वचनप्रवृत्तिरस्ति, समुत्थापकस्य विक-ल्पस्य तदानीमभावात् ॥ ३३५९ ॥ ३३६० ॥ ३३६१ ॥ ३३६२ ॥

ननु यदि विकल्पावस्थायामसर्वज्ञत्वमिष्यते तदा तद्वचनस्यासर्वज्ञभाषितत्वाद-प्रामाण्यमेव प्राप्नोतीत्याशङ्क्याह—**असर्वज्ञप्रणीतत्व**मित्यादि ।

**असर्वज्ञप्रणीतत्वं नचैवं तस्य युज्यते ।**
**सर्वज्ञतासमाक्षेपादतः संवादनं भवेत् ॥ ३३६३ ॥**
**अनुभूय यथा कश्चिदौष्ण्यं पश्चात्प्रभाषते ।**
**तस्माद्वस्त्वविसंवादस्तदर्थानुभवोद्भवात् ॥ ३३६४ ॥**
**तेन सर्वज्ञताकाले हेतोरस्याप्रसिद्धता ।**
**व्याहारवृत्तिकाले तु भवेत्सिद्धप्रसाधनम् ॥ ३३६५ ॥**

यद्यपि तस्यामवस्थायामसर्वज्ञस्तथाप्यसर्वज्ञप्रणीतत्वमस्य न भवति, कुतः ?, सर्व-ज्ञतया समाक्षिप्तत्वात्तस्य । अत एव सर्वज्ञज्ञानबलोत्पन्नविकल्पसमुत्थापितत्वात्तस्य पारम्पर्येण वस्तुनि प्रतिबन्धादनुमानविकल्पवत्प्रामाण्यमपि भवति । अत्रैव दृष्टान्त-माह—**अनुभूये**त्यादि । **तस्मा**दिति । उष्णानुभवबलभाविनो वचनात् । **तदर्था-नुभवोद्भवा**दिति । तस्योष्णार्थस्यानुभवात्पारम्पर्येण विकल्पस्योद्भवादित्यर्थः । **स्या-देतत्**—यदि सर्वज्ञस्य विकल्पप्रत्ययोऽस्ति तदा भ्रान्तः प्राप्नोति, विकल्पस्य प्रकृत्या स्वप्रतिभासेना(ऽन?)र्थेऽर्थाध्यवसायेन प्रवृत्तेर्भ्रान्तत्वादिति । **नैतदस्ति** । यद्यारोपितस्य तात्त्विकस्य च रूपस्य विभागं न जानीयात्तदा भ्रान्तो भवेत्, यावता विकल्पवि-षयमारोपितात्मनैव निश्चिन्वन्बाह्यं च वस्तु निर्विकल्पकज्ञानगोचरं पृथगेव तात्त्विकं तात्त्विकात्मना पश्यन्कथं विपर्यस्तो नाम । यद्यविपर्यस्तः कथमारोपयति विकल्पा-वस्थायामिति चेत् । न । शब्दप्रवृत्त्युपायज्ञत्वात् । यतो नान्यमारोपकविकल्पव्य-

तिरेकेण शब्दस्य समुत्थापकं पश्यति, नापि शब्दार्थमारोपितादन्यमुपलभते, अतः शब्दप्रवृत्त्युपायज्ञो जगदनुकम्पया यथावदधिगतं तत्त्वमप्रतिपाद्य परस्मै नासितुं समर्थः संस्तत्प्रतिपिपादयिषया शब्दप्रवृत्त्युपायमारोपकं विकल्पमारोप्यं च शब्दाभिधेयमारचयति । एतच्च पश्चादाशङ्क्य चोद्यं परिहरिष्यति । अस्माभिस्त्वत्र प्रस्तावागतत्वादित्यभिहितम् । अत एव वक्तृत्वाद्रागित्वानुमानमप्ययुक्तमन्यथापि वचनप्रवृत्तिसम्भवात् । नहि रागादीनामेव कार्यं वचनस्पन्दादयः, वक्तुकामतासामान्यहेतुत्वात् । भाव(सा च?)वक्तुकामता वीतरागस्य करुणयापि सम्भवतीति व्यभिचारः । सैव करुणा राग इति चेत् । न । (न)नामकरुण(या) किञ्चिदनिष्टमापद्यते । किंतु नित्यसुखात्मात्मीयदर्शनाक्षिप्तं साश्रववस्तुविषयं चेतसोऽभिष्वङ्गं रागमाहुः । तत्पूर्वकश्चात्मात्मीयोपरोधिनि प्रतिहतिर्द्वेषः । आत्मात्मीयग्रहश्च मोहो न चैव कृपा । तस्या असत्यप्यात्मग्रहे दुःखविशेषदर्शनमात्रेणाभ्यासबलेनैवोत्पादात् । तथाहि वीतरागाणां धर्माद्यालम्बना मैत्र्यादयः शास्त्रे वर्णिताः ॥३३६३॥३३६४॥ ॥ ३३६५ ॥

स्यादेतद्यदि सर्वविषयज्ञानासंमुखीभावमात्रं साध्यते, तथापि सिद्धसाध्यता भवेद्यावता समस्तवस्तुतत्त्वविस्तरज्ञानाशक्तता साधयितुमिष्टा, अतो न सिद्धसाध्यता नापि हेतोरसिद्धता व्याहारसामर्थ्यमात्रस्य हेतुत्वेन विवक्षितत्वात् इत्यत आह— **समस्ते**त्यादि ।

> **समस्तवस्तुविज्ञानशक्त्यपाकरणेऽपि ते ।**
> **संदिग्धव्यतिरेकित्वं तदवस्थं प्रसज्यते ॥ ३३६६ ॥**
> **व्याहारवृत्तिसामर्थ्ये हेतुत्वेनापि संमते ।**
> **संदिग्धव्यतिरेकित्वदोष एवानुवर्त्तते ॥ ३३६७ ॥**

उभयत्रापि पक्षे साध्यविपर्यये हेतोर्बाधकप्रमाणाभावात् । संदिग्धव्यतिरेकित्वेन नैकान्तिकता हेतोः ॥ ३३६६ ॥ ३३६७ ॥

अथ येषामविकल्प(य)तोऽपि भगवतो वचनप्रवृत्तिरिति पक्षस्तत्राह—**चक्रे**त्यादि ।

> **चक्रभ्रमणयोगेन निर्विकल्पेऽपि तायिनि ।**
> **सम्भारावेगसामर्थ्याद्देशना संप्रवर्त्तते ॥ ३३६८ ॥**
> **इति ये सुधियः प्राहुस्तान्प्रत्यपि न सिध्यति ।**

यथाहि चक्रस्योपरतेऽपि दण्डप्रेरणव्यापारे पूर्ववेगवशाद्भ्रमणम्, एवं भगवति प्रत्यस्तमितसमस्तकल्पनाजालेऽपि स्थिते प्रवर्त्तत एव पूर्वपुण्यज्ञानसम्भारावेगवशा-देशनेति सुधियः सौगताः केचन विज्ञानवादिनः प्रतिपन्नाः, तान्प्रति स्फुटतरमसि-द्धतादोषो हेतोरवसीयत एव ।

स्यादेतदस्मिन्दर्शने सर्वेषामेव स्वप्रतिभासानुभवमात्रत्वात्परमार्थतो न कस्यचिद्व-क्तृत्वमस्ति, किं त्वध्यवसायवशाद्वदत्यपि परस्मिंस्तथा प्रतिभासिविज्ञानोत्पत्ताव-धिपतिप्रत्ययभावेन स्थिते वक्तृत्वाभिमानो लोके, तदेवाध्यवसायिकं लोकप्रतीतं वक्तृत्वं हेतुत्वेनाभिप्रेतम् । नहि सिद्धान्तप्रसिद्धो हेतुर्धर्मी वा क्रियते, किं तर्हि लोकप्रतीत एवेत्यतो नासिद्धता हेतोरित्याशङ्क्याह—वक्तृत्वमित्यादि ।

**वक्तृत्वं यत्तु लोकेन मतमाध्यवसायिकम् ॥ ३३६९ ॥**
**तत्र तादृशि हेतोः स्यात्सन्दिग्धव्यतिरेकिता ।**

अत्रापि पूर्ववत्सन्दिग्धविपक्षव्यावृत्तिकत्वादनैकान्तिकता हेतोः ।

नन्वित्यादिना परो यदसिद्धत्वमत्र विज्ञानवादनये प्रोक्तं तद्विघटयति ।

**ननु चासिद्धता केन मतेऽत्रानुपपत्तिके ॥ ३३७० ॥**

एवं मन्यते—य एव तूभयनिश्चितवाची स एव साधनं दूषणं वा, नान्यतर-(रा?)प्रसिद्धः सन्दिग्धवाची, पुनः साधनापेक्षणादिति न्यायात् । अप्रमाणोपपन्ने-ऽस्मिन्विज्ञानवादमते कथमसिद्धतोद्भाव्यते, नहि स्वेच्छामात्रेण सिद्धत्वासिद्धत्व-परिकल्पनायां दूषणं भवति, किं तर्हि ?, प्रमाणबलोपपादितायां सिद्धावसिद्धौ वा, न च प्रमाणबलाद्विज्ञाननयः सिद्धः, अस्य विस्तरेण निरस्तत्वात् ॥ ३३६८ ॥ ॥ ३३६९ ॥ ३३७० ॥

उच्यत इत्यादिना प्रतिविधत्ते ।

**उच्यते यदि वक्तृत्वं स्वतन्त्रं साधनं मतम् ।**
**तदानीमाश्रयासिद्धः सन्दिग्धासिद्धताऽथवा ॥ ३३७१ ॥**
**अस्य चार्थस्य सन्देहात्सन्दिग्धासिद्धता स्थिरा ।**
**प्रसङ्गसाधनं तस्मात्त्वया वक्तव्यमीदृशम् ॥ ३३७२ ॥**
**तत्र चागममात्रेण सिद्धो धर्मः प्रकाश्यते ।**
**न तु तद्भावसिद्ध्यर्थं ज्ञापकं विद्यते परम् ॥ ३३७३ ॥**

अत्र विकल्पद्वयं कदाचिद्वक्तृत्वं स्वातन्त्र्येण साधनं वाभिप्रेतं भवेत्, प्रसङ्गसाधनं वा । तत्राद्ये पक्षे विशेषेणाश्रयो न सिद्ध इत्याश्रयासिद्धता हेतोः । अथ सामान्येनाश्रयो विवक्षितस्तथापि यावत्प्रतिवादिनं प्रति प्रमाणेन वक्तृत्वं न साध्यते तावत्सन्दिग्धासिद्धता, य एव तूभयनिश्चितवाची स एव साधनमिति न्यायात् । अस्येति । वक्तृत्वस्य । तस्मान्माभूदयं दोष इति प्रसङ्गसाधनमङ्गीकर्त्तव्यं त्वया । तत्रापि प्रसङ्गसाधने य एवाविचाररमणीयतयाऽऽगममात्रात्परस्य प्रसिद्धो धर्मः स एव साधनत्वेन प्रकाशनीयः परस्परविरोधोद्भावनाय, नत्वसौ प्रमाणेन साधनीयो निष्प्रयोजनत्वात् । नच वक्तृत्वं परस्यागममात्रेण प्रसिद्धमित्युभयथाऽप्रसिद्धता हेतोः ॥ ३३७१ ॥ ३३७२ ॥ ३३७३ ॥

एवमित्यादिनोपसंहरन्परोक्षेष्वर्थविपर्ययमादर्शयति ।

**एवं यस्य प्रमेयत्ववस्तुसत्त्वादिलक्षणाः ।**
**निहन्तुं हेतवोऽशक्ताः को न तं कल्पयिष्यति ॥ ३३७४ ॥**
**वेदवादिमुखस्थैवं युक्तिर्लौकिकवैदिकी ।**
**न काचिदपि शाक्योग्रसर्पज्ञानविषापहा ॥ ३३७५ ॥**
**दृग्विषैरिह दृष्टोऽपि स्वल्पशक्तिर्द्विजो जडः ।**
**उच्छ्वासमपि नो कर्त्तुं शक्नोति किमु वासि(बाधि?)तुम् ३३७६**
**वेदवादिमुखस्था तु युक्तिः साध्व्यपि दुर्भगा ।**
**कण्ठिका चरणस्थेव जघन्याश्रयसंस्थितेः ॥ ३३७७ ॥**

**को न तं कल्पयिष्यतीति** । सम्भवित्वेनेति शेषः । यतो बाधकानुपलम्भादेव तस्य सम्भावना सिद्ध्यतीति भावः । आस्तां तावदेतत्—यदसाध्वी युक्तिर्वेदवादिमुखस्था नैव शोभत इति, नैवात्र चित्रम्, किंतु—साध्व्यप्याश्रयदोषेण भवतोच्यमाना न भ्राजते ॥ ३३७४ ॥ ३३७५ ॥ ३३७६ ॥ ३३७७ ॥

कथमित्याह—पावकाव्यभिचारित्वमित्यादि ।

**पावकाव्यभिचारित्वं धूमस्यापि न शक्यते ।**
**वक्तुं तेन यतो धूमस्तन्मतेऽन्यत्र वर्त्तते ॥ ३३७८ ॥**
**एकवस्तुस्वरूपत्वादुदन्वत्यपि वर्त्तते ।**
**तत्राप्यनलसद्भावे व्यतिरेकः किमाश्रयः ॥ ३३७९ ॥**

धूमस्य हि दहनप्रतिबद्धजन्म तथा तदव्यभिचारित्वमागोपालमतिप्रतीतमेव, तस्यापि त्वया सर्वस्य जगतो वस्तुत्वादिना पारमार्थिकमैक्यं वर्णयता दहनाव्यभिचारित्वं न शक्यं प्रतिपादयितुम्, वस्तुस्वरूपत्वेनोदकेऽस्य भवन्मतेन धूमस्य परमार्थतो वृत्तेः । स्यादेतत्—अव्यभिचारितैवेत्याह—तत्रापीत्यादि । तत्राप्युदन्वति तादात्म्येन यद्यनलस्वभावोऽङ्गीक्रियते तदाऽनले साध्ये जलादिर्न विपक्षः स्यात्, ततश्च विपक्षाभावाद्धूमादेर्लिङ्गस्य किमाश्रयो विपक्षाद्व्यतिरेको भवेत् ॥ ३३७८ ॥ ॥ ३३७९ ॥

तद्रूपकार्यविज्ञप्तिः किंवा तत्रापि नो भवेत् ।
विलक्षणात्मभावे वा वस्तुभेदोऽस्तु तात्त्विकः ॥ ३३८० ॥

यदि जलधौ परमार्थतो दहनोऽवस्थित इति मतम्, किमिति तद्रूपोपलब्धिर्दाहपाकादिलक्षणकार्यनिर्भासा च विज्ञप्तिर्न जायते । वैलक्षण्यमपीष्टमिति चेदाह—विलक्षणात्मेत्यादि । एतच्च विस्तरेण स्याद्वादपरीक्षायां विचारितमित्यास्तां तावदेतत् ॥ ३३८० ॥

यदुक्तमेकेन प्रमाणेनेत्यादि, तत्राह—समस्तेत्यादि ।

समस्तवस्तुसम्बद्धतत्त्वाभ्यासबलोद्गतम् ।
सार्वज्ञं मानसं ज्ञानं मानमेकं प्रकल्प्यते ॥ ३३८१ ॥
नतु नेत्रादिविज्ञानं ततः किमिदमुच्यते ।
नूनं स चक्षुषा सर्वान्रसादीन्प्रतिपद्यते ॥ ३३८२ ॥
सिद्धं च मानसं ज्ञानं रूपाद्यनुभवात्मकम् ।
अविवादः परस्यापि वस्तुन्येतावति स्फुटः ॥ ३३८३ ॥
वर्ण्यते हि स्मृतिस्तेन रूपशब्दादिगोचरा ।
स्वप्ने च मानसं ज्ञानं सर्वार्थानुभवात्मकम् ॥ ३३८४ ॥
ततश्चानियतार्थेन मानसेन प्रकल्पिते ।
सर्वज्ञे चक्षुषा कस्माद्रसादीन्प्रतिपद्यते ॥ ३३८५ ॥
चाक्षुषेणैव तत्कृतसावयं दोषो भवेदपि ।
समासेन तु चित्तेन वेत्त्येव च रसादिकम् ॥ ३३८६ ॥
यत्राप्यतिशयो दृष्टः स्वस्वार्थानतिलङ्घनात् ।
दूरसूक्ष्मादिदृष्टौ स्यान्न रूपे श्रोत्रवृत्तितः ॥ ३३८७ ॥

**इत्यादिकमतोऽनिष्टं परैरुक्तं न नो यतः।**
**स्वार्थाविलङ्घनेनैव मानसेऽतिशयो मतः॥ ३३८८॥**
**यज्जातीयैः प्रमाणैश्च यज्जातीयार्थदर्शनम्।**
**दृष्टं सम्प्रति लोकस्य तथा कालान्तरेऽपि नः॥ ३३८९॥**

यदि चक्षुरादीन्द्रियधियां सर्वार्थपरिज्ञानमभ्युपगतं भवेत्, तदा भवेद्यथोक्तदोषप्रसङ्गः, यावता समस्तवस्तुगतानित्यत्वादिलक्षणाशेषतत्त्वाभ्यासप्रकर्षपर्यन्तजेन मनोविज्ञानेन सत्त्वार्थगोचरेण स्फुटप्रतिभासाविसंवादित्वाभ्यां प्रत्यक्षतामुपगतेन युगपदशेषवस्तुग्रहणात्सर्वविदिष्टः, नतु चक्षुरादिधिया। नच मनोज्ञानं सर्वार्थगोचरतया न प्रसिद्धमिति युक्तं वक्तुम्, यतो भवताऽपि रूपशब्दादिविषयं स्मार्त्तं ज्ञानमुपवर्णितम्। तच्च मनोज्ञानमेव। स्वप्ने च रूपादिप्रतिभासमतिप्रतीतमेवेति नास्यापह्नवः शक्यक्रियः। तेन स्वार्थाविलङ्घनेनैवातिशयस्येष्टत्वान्नास्माकं किञ्चिदनिष्टमापादितं भवता॥ ३३८१॥ ३३८२॥ ३३८३॥ ३३८४॥ ३३८५॥ ३३८६॥ ॥ ३३८७॥ ३३८८॥ ३३८९॥

यस्यापि ज्ञानवादिनोऽक्षधिया सर्वविदिष्टस्तस्यापि दोषा(प?)दौष्कुल्यवासनायाः प्रहाणे सति सर्वार्थवृत्तित्वेन सर्वधियां विभुत्वलाभस्येष्टत्वात्। दौष्कुल्यवासनैव हि धियां नियमकारणम्। तत्प्रहाणे सति कुतो नियतार्थविषयत्वमासां सम्भवेदिति मन्यमान आह—विशुद्धं वेत्यादि।

**विशुद्धं वा भवेज्ज्ञानं सर्वं सर्वार्थगोचरम्।**
**हेतोः संभाव्यते कश्चित्फलेऽप्यतिशयः क्वचित्॥ ३३९०॥**
**नहि सूक्ष्मफला दृष्टा आमलक्यो मराविति।**
**सर्वास्तत्त्वेन तद्रूपा अन्यत्रापि भवन्ति ताः॥ ३३९१॥**
**शृण्वन्ति चक्षुषा सर्पा इत्येषाऽपि श्रुतिस्ततः।**
**सम्भाव्यार्था विचित्रा हि सत्त्वानां कर्मशक्तयः॥ ३३९२॥**

कारणभेदेन हि भावानां स्वभावभेदप्रतिनियमान्न शक्यते क्वचिदेकदा दृष्टस्य वस्तुनः सर्वत्र सर्वदा तथा भावो निश्चेतुम्, नहि सूक्ष्मफला आमलक्यो मरुषु समुपलब्धा इत्येतावता सर्वत्र देशे सत्यपि कारणभेदसंभवे तथात्वेनावधारयितुं दर्शनमात्रेण प्रेक्षावन्तो युक्ताः। तेन चक्षुषाऽपि योगाभ्यासविशेषबलशलाकोन्मीलितेन कश्चिदपि सर्वार्थान्पश्यतीत्यविरुद्धम्॥ ३३९०॥ ३३९१॥ ३३९२॥

यज्जातीयैरित्यादावाह—**यस्येत्यादि** ।

**यस्याध्वत्रितयस्थं हि सर्वं वस्त्ववभासते ।**
**तथा नियतसामर्थ्यं वक्तुमित्थं स शोभते ॥ ३३९३ ॥**

**तथा नियतसामर्थ्यमिति** । तेनेष्टरूपेण नियतसामर्थ्यं सर्वं वस्त्ववभासत इति सम्बन्धः ॥ ३३९३ ॥

कीदृशं तद्वक्तुं शोभत इत्याह—**यज्जातीयैरित्यादि** ।

**यज्जातीयैः प्रमाणैस्तु यज्जातीयार्थदर्शनम् ।**
**भवेदिदानीं लोकस्य तथा कालान्तरेऽप्यभूत् ॥ ३३९४ ॥**
**इदानीमपि लोकस्य शक्तिर्ज्ञातुं न शक्यते ।**
**भवता जन्तुमात्रेण सर्वशक्त्यविनिश्चयात् ॥ ३३९५ ॥**
**निःशेषसत्त्वशक्तीनां ज्ञाने सर्वज्ञता बत ।**
**नचानुमानतः सिद्धिरन्यथाभावशङ्कया ॥ ३३९६ ॥**

स्यादेतत्—न वयं प्रत्यक्षतो ज्ञात्वैवं ब्रूमः 'तथा कालान्तरेऽप्यभू'दिति, किं तर्हि ?, अनुमानात् । यत्प्रमाणं यज्जातीयार्थग्राहि दृष्टं तत्कालान्तरेऽपि तथैवाभूत्प्रमाणत्वादिति, तत्राह—**न चानुमानतः सिद्धिरिति** । आमलक्यादिवद्धेतुविशेषणकार्यस्य विशेषदर्शनात् । अन्यथाऽपि विजातीयार्थग्रहणद्वारेण प्रवृत्तेः सम्भाव्यमानत्वादनैकान्तिकता हेतोः ॥ ३३९४ ॥ ३३९५ ॥ ३३९६ ॥

येऽपि सातिशया दृष्टा इत्यादावाह—**अतीन्द्रियार्थविज्ञानयोगेनापीत्यादि** ।

**अतीन्द्रियार्थविज्ञानयोगेनाप्युपलभ्यते ।**
**प्रज्ञादिगुणयोगित्वं पुंसां विद्यादिशक्तितः ॥ ३३९७ ॥**
**अस्ति हीक्षणिकाद्याख्या विद्यायां सुविभाविता ।**
**परचित्तपरिज्ञानं करोतीहैव जन्मनि ॥ ३३९८ ॥**
**श्रुतानुमितदृष्टं च यन्न वस्त्वत्र जन्मनि ।**
**भूतं भवद्भविष्यच्च तद्विदन्ति वदन्ति च ॥ ३३९९ ॥**
**ससंवादमभिव्यक्तमाविष्टाः पुरुषा इह ।**
**विचित्रमन्त्रनागेन्द्ररक्षोयक्षादिशक्तितः ॥ ३४०० ॥**
**मावा भूद्दृष्टमित्यादि तथाऽप्यत्र न बाधकम् ।**
**किञ्चित्प्रमाणमस्तीति तदभावो न सिद्ध्यति ॥ ३४०१ ॥**

नन्वतीन्द्रियार्थदर्शनादित्यसिद्धमेतत्, तथाहि—ईक्षणिकादिविद्याबलेन डाकिन्यादीनां परचित्तज्ञानं भूतभवद्भविष्यद्वस्तुपरिज्ञानं चोपलभ्यत एव । आदिशब्देन गान्धारीप्रकृतीनां ग्रहणम् । विचित्रभूतग्रहाद्या(द्या?)वेशबलाच्चातीन्द्रियार्थपरिज्ञानदर्शनादन्यत्राप्यप्रतिक्षेपः । मा भूद्वा व्यभिचारविषयदर्शनम् । तथाप्यप्रति(लम्भ)मात्रेण सर्वविदो नाऽभावो निश्चेतुं युक्तः । तदभावः—अतीन्द्रियार्थदृगभावो न सिद्ध्यति ॥ ३३९७ ॥ ३३९८ ॥ ३३९९ ॥ ३४०० ॥ ३४०१ ॥

प्राज्ञोऽपि हीत्यादावाह—उक्तेन चेत्यादि ।

**उक्तेन च प्रकारेण वेदकारे प्रसाधिते ।**
**अवश्याभ्युपगन्तव्यस्त्वयाऽतीन्द्रियदृग्नरः ॥ ३४०२ ॥**
**अतः प्राज्ञो नरः सूक्ष्मानर्थान् द्रष्टुं क्षमो भवेत् ।**
**सजातीरप्यतिक्रामन्परानभिभवेन्नरान् ॥ ३४०३ ॥**

उक्तेनेति । अ(श्रु?)तिपरीक्षायाम् ॥ ३४०२ ॥ ३४०३ ॥

अत्रैवोपपत्तिमाह—यथा स्वविषय इत्यादि ।

**यथा स्वविषये शक्तिः श्रोत्रादेः प्रविशिष्यते ।**
**गतियोगविशेषाद्यैर्मनसोऽपि तथा भवेत् ॥ ३४०४ ॥**

यथा गतिविशेषेणाञ्जनादिलक्षणयोगविशेषेण च श्रोत्रादेः स्वार्थशक्तिर्विशिष्यते तथा मनसोऽपि हेतुविशेषेण शक्तिः प्रविशिष्यत इति सम्भाव्यम् ॥ ३४०४ ॥

तत्र गतिविशेषकृतं श्रोत्रादेर्विशेषं दर्शयति—तथाहीत्यादि ।

**तथाहि वीक्ष्यते रूपं गृध्रैर्दूरतरस्थितम् ।**
**तिरस्कृतं निधानादि तथा सिद्धाञ्जनादिकैः ॥ ३४०५ ॥**

योगविशेषकृतमप्याह—तिरस्कृतमित्यादि । सिद्धाञ्जनादिकैरिति । वीक्ष्यत इति सम्बन्धः । हेतौ करणे वा तृतीयेयम् ॥ ३४०५ ॥

एवं गतिविशेषस्य ज्ञानशक्तिविशेषंप्रति हेतुभावं प्रसाध्य दार्ष्टान्तिकेऽर्थे योजयन्नाह—एवमित्यादि ।

**एवं गतिविशेषेण देवादेर्दर्शनं भवेत् ।**
**सूक्ष्मव्यवहितादीनां स्वोपपत्त्यानुरूप्यतः ॥ ३४०६ ॥**

स्वोपपत्त्यानुरूप्यत इति । अथ्वाादेर्या ज्ञानदर्शनं प्रवर्त्तते नोर्ध्वमित्येवं यथा-

त्वनुपपत्त्या आनुरूप्येण ज्ञानं भवत्वातु(ज्ञातु?)महाराजकायिकादीनां(?) देवानां केन वार्यते ॥ ३४०६ ॥

योगकृतमपि विशेषं योजयति—योगाभ्यासेत्यादि ।

योगाभ्यासविशेषाच्च योगिनां मानसं तथा ।
ज्ञानं प्रकृष्टरूपं स्यादित्यत्रास्ति न बाधकम् ॥ ३४०७ ॥

यदि तु पुनर्यथोक्तगतियोगादिकारणासम्भवमुपदर्श्यातिशयनिषेधः क्रियते तदा सिद्धसाध्यतेति दर्शयन्नाह—गतियोगादिवैकल्य इति ।

गतियोगादिवैकल्ये ज्ञाने त्वतिशयो यदि ।
क्षिप्यतेऽयुक्तमेतद्धि हेत्वभावात्फलं नहि ॥ ३४०८ ॥
यथा शास्त्रान्तरज्ञानं तन्मात्रेण न लभ्यते ।
उत्तरोत्तरतद्धेतुवैकल्येऽतिशयस्तथा ॥ ३४०९ ॥

देवानाम् । यच्चोक्तम्—'श्रोत्रगम्येष्वि'त्यादि, तदप्यनेनैव प्रत्युक्तम्, अदर्शनमात्रेण तथाविधस्यातिशयस्य प्रतिषेद्धुमशक्यत्वादित्यभिप्रायः ॥ ३४०८ ॥ ३४०९ ॥

यच्चोक्तम्, 'एवं शास्त्रविचारेष्वि'त्यादि, (तत्राह)—न चैकदेशेत्यादि ।

नचैकदेशविज्ञानात्सर्वज्ञानास्तितोच्यते ।
येन वेदादिविज्ञानात्स्वर्गाद्यध्यक्षता भवेत् ॥ ३४१० ॥
किंतु प्रज्ञाकृपादीनामभ्यासाद्वृद्धिदर्शनात् ।
अन्योऽप्यतिशयस्तस्माद्वर्धमानात्प्रतीयते ॥ ३४११ ॥
मनोगुणतयाऽप्येषां काष्ठापर्यन्तसम्भवः ।
नैर्घृण्यवन्महाभ्यासान्निष्ठाऽशेषार्थबोधनात् ॥ ३४१२ ॥
धर्मा(अर्था?)वबोधरूपा हि प्रज्ञा लक्षणतः स्थिता ।
एकस्याप्यपरिज्ञाने साऽसमाप्तैव वर्त्तते ॥ ३४१३ ॥

नह्यस्माभिरेकदेशपरिज्ञानमात्रादशेषपदार्थपरिज्ञानमभ्युपगम्यते, येनाभ्यधायि भवता 'न(तु) शास्त्रान्तरज्ञानं तावन्मात्रेण लभ्यत' इति । किंत्वभ्यासवशात्प्रज्ञाप्रकर्षोपलम्भादन्योऽप्यतीन्द्रियपरिज्ञानकृतो विशेषस्तस्मादभ्यासाद्वर्द्धमानात्प्रकर्षविशेषं प्राप्ताद्भवतीति सम्भाव्यते । एतच्च पूर्वं प्रसाधितं पुनरपि भूयः प्रमाणयति—प्रयोगः—ये ये मनोगुणास्तेऽभ्यासातिशये सति सम्भवत्प्रकर्षपर्यन्तवृत्तयः, यथा

श्रोत्रियजोदिंग(?)नैर्घृण्यम्, मनोगुणश्च प्रज्ञेति स्वभावहेतुः। न नैकान्तिकता हेतोः, प्रज्ञायाः पदार्थस्वभावबोधलक्षणायाः प्रकर्षपर्यन्तगमनं नाशेषार्थपरिज्ञानमन्तरेण संभवति। नाप्यप्रसिद्धविशेषणतया हेतोरसिद्धता, पूर्वमभ्यासविशेषसम्भवस्य विस्तरेण प्रसाधितत्वात्। काष्ठाशब्दः प्रकर्षपर्यायः॥ ३४१०॥ ३४११॥३४१२॥ ॥ ३४१३॥

**ये वा समानजातीयपूर्वबीजप्रवृत्तयः।**
**तेऽत्यन्तवृद्धिधर्माणः संस्कारोत्कर्षभेदतः॥ ३४१४॥**
**व्रीह्यादिवत्सम्भविनो दयामत्यादयोऽपि च।**
**यथाभिहितधर्माणः प्रवृद्धौ सर्वदर्शिता॥ ३४१५॥**

अथवा ये तुल्यजातीयपूर्वबीजप्रसूतयस्ते संस्कारविशेषे सत्यत्यन्तवृद्धिधर्माणः सम्भविनः, यथा व्रीह्यादयः, यथोक्तधर्माणश्च दयाप्रज्ञादय इति स्वभावहेतुः। अत्रापि पूर्ववदसिद्धानैकान्तिकता न भवति। मतिः—प्रज्ञा। **यथाऽभिहितधर्माण** इति। समानजातीयपूर्वबीजप्रवृत्तय इत्यर्थः॥ ३४१४॥ ३४१५॥

**ये चापचयधर्माणः प्रतिपक्षस्य सन्निधौ।**
**अत्यन्तापचयस्तेषां कलधौतमलादिवत्॥ ३४१६॥**
**सम्भाव्यन्ते तथा चामी क्लेशज्ञेयावृतादयः।**
**यथोपदिष्टधर्माणस्तत्प्रहाणेऽमला धियः॥ ३४१७॥**
**यथोक्तधर्मणामेषां सम्भाव्यो यदि वा मलः।**
**अत्यन्तोन्मूलने दक्षः प्रतिपक्षस्तथैव हि॥ ३४१८॥**

अथवा ये प्रतिपक्षसन्निधावपचयधर्माणो दृष्टास्ते प्रतिपक्षात्यन्तवृद्धौ सत्यां सम्भवदत्यन्तापचयधर्माणः, यथा कनकमलादि, नैरात्म्याविलक्षणसंमुखीभावे चापचयधर्माणो रागादय इति स्वभावहेतुरिति। नासिद्धता हेतोः, नैरात्म्यज्ञानेन सह क्लेशादेर्विरोधस्य प्रसाधितत्वात्। नाप्यनैकान्तिकता, प्रतिपक्षात्यन्तवृद्धौ सत्यां विपक्षस्यावस्थानासम्भवात्। अन्यथा योऽत्यन्तमुन्मूलयितुमसमर्थः स कथमल्पमप्यपचयं कुर्यात्। नहि स्फुटतरस्फुरत्स्फुलिङ्गमालोज्ज्वलज्वलनकलापान्तर्गतमपि वज्रमपचयमनुभवति कदाचित्। न चापि विपक्षस्यात्यन्तवृद्धसम्भवादनैकान्तिकता, पूर्वं विस्तरेणात्यन्तवृद्धिसम्भवस्य प्रसाधितत्वात्। अथवा ये प्रतिपक्षसन्निधावप-

यधर्माणस्ते सम्भवदत्यन्तोन्मूलनदक्षप्रतिपक्षाः, तद्यथा कनकमलादि, यथोक्तधर्माणश्च क्लेशज्ञेयावरणादय इति स्वभावहेतुः । अत्रापि पूर्ववदसिद्धानैकान्तिकते परिहार्ये । आदिशब्देन कर्मावरणादिपरिग्रहः ॥ ३४१६ ॥ ३४१७ ॥ ३४१८ ॥

**तत्त्वदृष्टिनिबन्धत्वादत्यन्तापचयः क्वचित् ।**
**बाह्यस्येवास्य तमस आन्तरस्यापि गम्यते ॥ ३४१९ ॥**
**तस्य चापचये जाते ज्ञानमव्याहतं महत् ।**
**स्वातन्त्र्येण प्रवर्त्तेत सर्वत्र ज्ञेयमण्डले ॥ ३४२० ॥**

अथवा ये तत्त्वदर्शननिबन्धकारिणस्ते सम्भवदत्यन्तापचयाः, यथा बाह्यं शार्वरं तमः, तत्त्वदर्शननिबन्धकारिणश्च क्लेशज्ञेयावरणादय इति स्वभावहेतुः । नचास्यानैकान्तिकतेति दर्शयन्नाह—**तस्य चेति** । तस्यान्तरस्य तमसः ॥ ३४१९॥३४२०॥

**ये वा स्थिराश्रये वृत्ताः कथञ्चिदपि चाहिताः ।**
**तद्भावायापुनर्यत्नव्यापेक्षा बाधकेऽसति ॥ ३४२१ ॥**
**संस्कारोत्कर्षभेदेन काष्ठापर्यन्तवृत्तयः ।**
**ते सम्भवन्ति विस्पष्टं शातकुम्भविशुद्धिवत् ॥ ३४२२ ॥**
**यथाऽभिहितधर्माण इमे मतिदयादयः ।**
**तेषां पर्यन्तवृत्तौ च सर्ववित्त्वं प्रभास्वरम् ॥ ३४२३ ॥**
**लङ्घनोदकतापाभ्यां नचेह व्यभिचारिता ।**
**नहि तल्लङ्घनादेव लङ्घनं बलयत्नयोः ॥ ३४२४ ॥**

अथवा—ये स्थिराश्रयवर्त्तिनः सकृच्च यथाकथञ्चिदाहितविशेषाः सन्तोऽसति विरोधिप्रत्यये तद्भावायापुनर्यत्नापेक्षिणस्ते संस्कारोत्कर्षभेदेन सम्भवत्प्रकर्षपर्यन्तवृत्तयः, तद्यथा कनकविशुद्ध्यादयः, यथोक्तधर्माणश्च प्रज्ञाकृपादय इति स्वभावहेतुः । **लङ्घनोदकतापाभ्यां न चेह व्यभिचारितेति** । सविशेषणत्वादित्यभिप्रायः । नहि लङ्घनोदकतापौ सकृदाहितौ पुनराधानाय यत्नादिनिरपेक्षौ वर्त्तेते । नापि स्थिराश्रयौ यदि वाऽत्रापि समानजातीयबीजवृत्तित्वे सतीति विशेषणापेक्षणादव्यभिचारो लङ्घनेनेति मन्यमान आह—**नहि तल्लङ्घनादेवेति** । तल्लङ्घनं नहि लङ्घनादेव जायते । कस्मिन् सति नाम जायते इत्याह—**लङ्घनं बलयत्नयोरिति** । बले यत्ने च सति लङ्घनं भवति, नतु लङ्घने सति । तयोश्च बलयत्नयोः स्थितशक्तितया लङ्घनस्यापि

स्थितात्मतेति भावः । स्यादेतद्यदि बलयत्नाभ्यामेव लङ्घनं भवति न लङ्घनात्, एवं सत्यभ्यासे यादृशं लङ्घनं पुरुषस्य भवति तादृगभ्यासात्प्रागपि प्राप्नोतीति । नैष दोषः । प्राक्तनस्य श्लेष्मादिना देहस्य विगुणत्वात्पश्चाद्वन्न लङ्घनमुपजायते । पश्चात्तु शनैः प्रयत्नेन देहवैगुण्येऽपनीते सति यथाबलमेवावतिष्ठते लङ्घनम् । अवश्यं चैतदेवं विज्ञेयम् । अन्यथा यदि लङ्घनादेव लङ्घनं स्यात्तदा लङ्घनस्य व्यवस्थितोत्कर्षता न स्यात् ॥ ३४२१ ॥ ३४२२ ॥ ३४२३ ॥ ३४२४ ॥

अथवा लङ्घनस्यापि हेतुविशेषापेक्षिणः स्थितोत्कर्षताया असिद्धेर्न तेन व्यभिचार इति दर्शयति—यदि वेत्यादि ।

**यदि वा लङ्घनस्यापि काष्ठापर्यन्तवृत्तिता ।**
**समाधिबलगत्यादिविशेषात्स्यात्स्वहेतुतः ॥ ३४२५ ॥**
**सिद्धिर्मनोजवासंज्ञा तथाच श्रूयते प्रभा ।**
**यथा चिन्तितमात्रेण याति दूरमपि प्रभुः ॥ ३४२६ ॥**
**नचाप्यदृष्टिमात्रेण तदभावः प्रसिद्ध्यति ।**
**नचात्र बाधकं किंचिद्वक्तुमत्र परः क्षमः ॥ ३४२७ ॥**

तथाहि—समाधिबलविशेषप्रयोगाल्लङ्घनस्यास्माभिरिष्यत एवात्यन्तप्रकर्षवर्त्तित्वम्, यथा भगवतो मनोजवा नाम सिद्धिः पठ्यते, यस्यां स्थितस्य मनस इव जवो भवति । अत एव सा मनोजवेति प्रख्याता । नचास्या बाधकं प्रमाणमस्ति । नाप्यदर्शनमात्रेण प्रतिक्षेपो युक्तोऽतिप्रसङ्गात् ॥ ३४२५ ॥ ३४२६ ॥ ३४२७ ॥

अपि च दृश्यत एवाश्रये विशेषोपाधिकादभ्यासविशेषाद्गतेरत्यन्तविशेषः, ततोऽपि भगवतस्तादृशी गतिः सम्भविनीति दर्शयन्नाह—राजहंसशिशुरित्यादि ।

**राजहंसशिशुः शक्तो निर्गन्तुं न गृहादपि ।**
**याति चाभ्यासभेदेन पारमम्भःपतेरपि ॥ ३४२८ ॥**
**आश्रयोपाधिकाभ्यासभेदादस्य गतिर्यथा ।**
**तादृशी तादृशादेव किं न सम्भाव्यतेऽधिका ॥ ३४२९ ॥**
**बोधिसत्त्वदशायां हि न शक्तस्तादृशीं गतिम् ।**
**प्राप्तुं प्राप्ते समाधौ तु विशिष्टे शक्नुयान्मुनिः ॥ ३४३० ॥**

यथा च राजहंसशावः प्राक् स्वकुलायादपि निर्गन्तुमशक्तः पश्चादल्पीयसाप्य-

भ्यासे सति समुपजातपक्षो जलधेरपि पारमुत्पतति, तद्वदन्योऽप्याश्रयविशेषोपाधिकादभ्यासाद्विशिष्टामपि गतिमासादयतीति सम्भाव्यम् । पक्षविशेषलाभादेवासौ दूरतरदेशगामी भवतीति नाभ्यासबलेनेति चेत् । नहि सञ्जातपक्षोऽपि सहसैवोड्डीय गच्छन् दृश्यते शकुनिशावः, किं तर्हि ?, शाखान्तराच्छाखान्तरगमनक्रमेणाभ्यस्य कियन्मात्रं गमनं पश्चादपास्तशङ्को दूरतरमपि देशं व्रजति । किञ्च—आश्रयविशेषलाभे सति यथा हंसादेः प्रागशक्तस्यापि सतः पश्चाद्गतिर्विशेष्यते तथा भगवतोऽपि बोधिसत्त्वावस्थायामशक्तस्यापि सतः पश्चात्समाधिविशेषलाभादासादिताश्रयविशेषस्य तथाविधा गतिः सम्भाव्यत इत्येवम्परमेतत् । अभ्यासग्रहणमतन्त्रम् । प्रयोगः—यः सम्भवदाश्रयविशेषोपाधिरभ्यासः स सम्भवदत्यन्तदूरगमनफलः, यथा राजहंसशिशोरभ्यासः, सम्भवदाश्रयविशेषोपाधिर्मनुष्याणामभ्यास इति स्वभावहेतुः ॥ ३४२८ ॥ ३४२९ ॥ ३४३० ॥

यदुक्तं दशहस्तान्तरमित्यादि तदपास्तमिति दर्शयति—दशेत्यादि ।

**दशहस्तान्तरव्योम्नस्तद्यदुत्प्लुत्य गच्छति ।**
**शक्तिः स्यादीदृशी हेतोस्तस्य दूरगतावपि ॥ ३४३१ ॥**

स्थिराश्रयत्वे सतीति विशेषणोपादानादुदकतापेन नानैकान्तिक इति दर्शयति—उष्णतामित्यादि ।

**उष्णतां नीयमानस्य क्षयो भवति चाम्भसः ।**
**अस्थैर्यादाश्रयस्यातः कस्य कस्मिन्प्रकृष्टता ॥ ३४३२ ॥**

स्यादेतत्, प्रज्ञादेस्तु स्थिराश्रयत्वमेव कथं सिद्धमित्याह—मानसानामित्यादि ।

**मानसानां गुणानां तु चित्तसन्ततिराश्रयः ।**
**साऽधारयोगतो वृत्तान्न कथंचिन्निवर्त्तते ॥ ३४३३ ॥**

सेति । चित्तसन्ततिः । आधारयोगतो वृत्तादिति । बोधिसत्त्वाश्रयलक्षणाधारसम्बन्धेन प्रवृत्तेरित्यर्थः । विशिष्टस्याधारस्य विवक्षितत्वात् । तथाहि—परलोकस्य प्रसाधितत्वाद्बोधिसत्त्वानां च सात्मीभूतमहाकृपाणामासंसारमशेषसत्त्वोद्धरणायावस्थानात्तदाश्रयवर्त्तिनी चित्तसन्ततिरतितरां स्थिराश्रया । या तु श्रावकादीनां सन्तानवर्त्तिनी सा न स्थिराश्रया तेषां शीघ्रतरं परिनिर्वाणान्मन्दत्वात् कृपायास्तेषामवस्थाने यत्नाभावादिति भावः ॥ ३४३३ ॥

द्वितीयमपि विशेषणं कथं सिद्धमिति चेदाह—यावदित्यादि ।

यावद्यावद्गुणौघोऽस्यामाभिमुख्येन वर्त्तते ।
प्रभास्वरतरा तावत्सुतरामेव वर्त्तते ॥ ३४३४ ॥

एतदेव कथं सिद्धमित्याह—प्रभास्वरमित्यादि ।

प्रभास्वरमिदं चित्तं तत्त्वदर्शनसात्मकम् ।
प्रकृत्यैव स्थितं यस्मान्मलास्त्वागन्तवो मताः ॥ ३४३५ ॥

एतच्च पूर्वमेव व्याख्यातमस्माभिः । एते च प्रकृत्या तत्त्वदर्शनात्मकतया चित्तस्य स्वभावभूताः प्रज्ञादयो विशेषा इति प्रतिपादितमिति स्वभावत्वेन प्रज्ञादीनां सकृदाहितानां स्वरसत एव प्रकृतिर्भवतीति सिद्धम् ॥ ३४३५ ॥

द्वितीयमपि विशेषणं तत्त्वदर्शनात्मकमेव विज्ञानस्य कथं सिद्धमिति चेदाह—परबोधात्मेत्यादि ।

परबोधात्मनियतं चेतो यदि हि सम्भवेत् ।
तदाऽसिद्धोपलम्भत्वादर्थवित्तिर्न सम्भवेत् ॥ ३४३६ ॥
तस्मात्स्वसंवेदनात्मत्वं चेतसोऽस्ति प्रकाशनात् ।
अनारोपितरूपा च स्वसंवित्तिरियं स्थिता ॥ ३४३७ ॥

मुख्यं हि तावच्चित्तस्य स्वसंवेदनमेव रूपमित्यवश्यं सर्ववादिभिरभ्युपेयम्, अन्यथा यदि परेण ज्ञानान्तरेण बुध्यत इति स्यात्तदाऽप्रसिद्धोपलम्भत्वेनार्थवित्तिर्न सिद्ध्येत् । तस्मान्मुख्यं चेतस आत्मप्रकाशनमेव रूपम् । स चात्मा तस्यानित्यादिरूप इति सामर्थ्यात्तत्त्वदर्शनात्मकमेव चित्तं सिद्धमिति भावः ॥३४३६॥३४३७॥

स्यादेतत्—भवतु तत्त्वदर्शनात्मकं चेतस्तथाऽपि प्रहीणानामपि मलानां पुनरुत्पत्तिसम्भवात्सर्वेषामेव यथोक्तानां हेतूनामनैकान्तिकता दुर्निवारेत्याशङ्क्याह—मार्गे सात्म्यमित्यादि ।

मार्गे सात्म्यमतो याते तेत(तैस्त?)स्याभिभवो न हि ।
रागद्वेषादिभिर्दोषैस्ते हि प्रागेव दुर्बलाः ॥ ३४३८ ॥
सात्मीभावाच्च मार्गस्य सर्वापक्षालनाशिनः ।
न यत्नेन विना हानिर्यत्नो न गुणदर्शनात् ॥ ३४३९ ॥
अतो निर्मलनिष्कम्पगुणसन्दोहभूषणः ।
दोषवाताविकम्प्यात्मा सर्वज्ञो गम्यते जिनः ॥ ३४४० ॥

पृष्टेन तथा सामर्थ्याविदमभिधानीयम्—न मया स्वयमागमस्य तत्प्रणीतत्वमुपलभ्य तस्य वक्तृत्वं प्रसाध्यते, किं तर्हि?, भवद्भिरेवागमस्य तत्प्रणीतत्वमिष्टम्, तच्च भवतां नोपपद्यते यदि तस्य वक्तृत्वं नेष्येत । तस्मादवश्यमागमस्य तत्प्रणीतत्वमिच्छद्भिर्वक्तृत्वमपि तस्येष्टव्यमित्येवमनिष्टापादनं प्रसङ्गेन क्रियत इति ॥ ३६०२ ॥ ॥ ३६०३ ॥ ३६०४ ॥ ३६०५ ॥

एवं प्रसङ्गसाधनत्वं समर्थ्य साम्प्रतं प्रकृतार्थानुरूप्यानमिधानं योजयितुमाह यद्येवमित्यादि ।

**यद्येवमीदृशो न्यायः प्रसिद्धो न्यायवादिनाम् ।**
**प्रसङ्गसाधने धर्मः श्रद्धामात्रात्परैर्मतः ॥ ३६०६ ॥**
**युक्तिप्रसिद्धतायां च स्वतन्त्रं साधनं भवेत् ।**
**ईदृशश्च परेणेष्टस्तत्प्रणीतः स आगमः ॥ ३६०७ ॥**
**सम्भारावेधतस्तस्य पुंसश्चिन्तामणेरिव ।**
**निःसरन्ति यथाकामं कुड्यादिभ्योऽपि देशनाः ॥ ३६०८ ॥**
**आधिपत्यप्रपत्त्याऽतः प्रणेता सोऽभिधीयते ।**
**विकल्पानुगतं तस्य न वक्तृत्वं प्रसज्यते ॥ ३६०९ ॥**
**वयमश्रद्दधानास्तु ये युक्तीः प्रार्थयामहे ।**
**इतीदं गदितं तस्मात्प्रसङ्गार्थमजानता ॥ ३६१० ॥**

य एव हि धर्मः परेणागममात्रादभ्युपेतः स एव प्रसङ्गसाधनेऽभिधीयत इति न्यायः । तत्र यदि परेण वक्तृत्वानुगमेन तत्प्रणीतत्वमागमस्येष्टं स्यात्तदा भवेद्वक्तृत्वाभावादागमस्यातत्प्रणीतत्वप्रसङ्गः, यावताऽधिपत्यमात्रेणासौ तस्यागमस्य प्रणेताऽभ्युपगतो न वक्तृत्वोपगमात् । अ तो यत्तत्प्रणीतागमोपगमेन वक्तृत्वापादनं तत्प्रसङ्गार्थानमिज्ञेन भवताऽभ्यधायि ॥ ३६०६ ॥ ३६०७ ॥ ३६०८ ॥ ३६०९ ॥ ॥ ३६१० ॥

यच्चेदमुक्तं कुड्यादिनिःसृतानामित्यादि । तत्राह—कुड्यादीत्यादि ।

**कुड्यादिनिःसृतानां च कस्मान्नाप्तोपदिष्टता ।**
**तदाधिपत्यभावेन यदा तासां प्रवर्त्तनम् ॥ ३६११ ॥**

यदि हि तदाधिपत्येन तासां देशनानां न स्यात्प्रवृत्तिस्तदाऽऽप्तोपदिष्टता न भवेत् ।

यदा तु तदाधिपत्येन ताः प्रवर्त्तन्त इत्युपगतं तदा किमिति तदुपदिष्टत्वमासां न भवेत् ॥ ३६११ ॥

यदुक्तम्—विश्वासश्च न तासु स्यादिति, तत्राह—सम्भिन्नेत्यादि ।

**सम्भिन्नालापहिंसादिकुत्सितार्थविवर्जिताः ।**
**क्रीडाशीलपिशाचादिप्रणीताः स्युः कथं च ताः ॥३६१२॥**
**सम्भिन्नालापहिंसादिकुत्सितार्थोपदेशनम् ।**
**क्रीडाशीलपिशाचादिकार्यं तासु न विद्यते ॥ ३६१३ ॥**
**प्रमाणद्वयसंवादि मतं तद्विषयेऽखिले ।**
**यस्य बाधा प्रमाणाभ्यामणीयस्यपि नेक्ष्यते ॥ ३६१४ ॥**
**यच्चात्यन्तपरोक्षेपि पूर्वापरविबाधितम् ।**
**करुणादिगुणोत्पत्तौ सर्वपुंसां प्रयोजकम् ॥ ३६१५ ॥**
**सर्वाकारधरोपेतं सद्वृत्तप्रतिपादकम् ।**
**इहामुत्र च भव्यानां विविधाभ्युदयावहम् ॥ ३६१६ ॥**
**सर्वानुशयसन्दोहप्रतिपक्षाभिधायकम् ।**
**निर्वाणनगरद्वारकपाटपुरभेदि च ॥ ३६१७ ॥**
**तच्चेत्क्रीडनशीलानां रक्षसां वा वचो भवेत् ।**
**त एव सन्तु सम्बुद्धाः सर्वतल्लक्षणस्थितेः ॥ ३६१८ ॥**
**नहि नामान्तरक्लृप्तौ वस्तुरूपं निवर्त्तते ।**
**विशिष्टेऽशिष्टसंज्ञां तु कुर्वन्निन्द्यः सतां भवेत् ॥ ३६१९॥**

यदि हि नृत्यगीतहिंसागम्यगमनादेः तत्कर्तव्यतया तत्रोपदेशः स्यात्तदा क्रीडाधमिरतपिशाचादिकार्योपलम्भात्तासां तत्प्रणीतत्वं सम्भावनापथमवतरेत् । यावता प्रमाणाविरुद्धमपरस्परपराहतमार्यजनोचितं—करुणादिगुणेषु नियोजयितृ स्वर्गापवर्गफलवाहकमेतद्भगवतो वचनमित्युपपादितमेतत् । तदीदृशं कथं क्रीडनशीलस्य पिशाचादेः सम्भाव्यते । यदि नृणामपि भवता पिशाच इति नाम क्रियते । कामं क्रियतां नहि नामकरणे वस्तुस्वभावहानिः । किन्तु भवानेव विशिष्टे भगवत्यशिष्टव्यवहारं कुर्वन्सतां निन्द्य आपद्येतेति समासार्थः । अवयवार्थस्तूच्यते—सम्भिन्नालापो—गीताद्युपदेशः । हिंसा—प्राणिवधः । कुत्सितार्थः—काममिथ्याचारादिः ।

**प्रमाणद्वयसंवादी**ति । प्रमाणद्वयं—प्रत्यक्षानुमाने, ताभ्यां संवादस्तदविरुद्धार्थता सोऽस्यास्तीति तत्तथोक्तम् । **मत**मिति । निश्चितम् । **तद्विषयेऽखिल** इति । प्रमाणद्वयविषये । प्रमाणद्वयसंवादीति सम्बन्धः । सद्वृत्तम्—आदिमध्यान्ते कल्याणं ब्रह्मचर्यम् सर्वानुशयसन्दोहः—दृग्भावनाहेयक्लेशौघः । **तल्लक्षणस्थिते**रिति । सम्बुद्धलक्षणस्थितेः ॥ ३६१२ ॥ ३६१३ ॥ ३६१४ ॥ ३६१५ ॥ ३६१६॥३६१७॥ ॥ ३६१८ ॥ ३६१९ ॥

यच्चोक्तम्—'अभिज्ञातमभिज्ञेयं भावनीयं च भावितम् । प्रहातव्यं च प्रहीणं च तेन बुद्धो निरुध्यत' इति, वेदस्यैव क्रीडाशीलपिशाचादिप्रणीतत्वं युक्तं सम्भावयितुम् । येन गोसवादिष्वगम्यगमनादयोऽसमाचाराः संप्रकाशिता इत्येतद्दर्शयन्नाह—**कामे**त्यादि ।

**काममिथ्यासमाचारप्राणिहिंसादिलक्षणाः ।**
**असभ्यास्तु क्रिया येन वचसा सम्प्रकाशिताः ॥ ३६२० ॥**
**तद्भुजङ्गपिशाचादिप्रणीतमिति शङ्क्यते ।**
**तच्चेष्टाभिरतानां हि तादृक्सम्भाव्यते वचः ॥ ३६२१ ॥**

भुजङ्गो—धूर्त्तः ॥ ३६२० ॥ ३६२१ ॥

यच्चोक्तम्—युगपच्छुच्यशुच्यादीत्यादि, तत्राह—**युगप**दित्यादि ।

**युगपच्छुच्यशुच्यादिस्वभावानां विरोधिनाम् ।**
**ज्ञानमेकधिया दृष्टं न विरुद्धा विदा हि ते ॥ ३६२२ ॥**

यद्यपि भावाः केचित्परस्परं विरोधिनः, तथापि ते विदा—ज्ञानेन सहाविरुद्धा एव । युगपदेकेनापि ज्ञानेन विरुद्धानेकार्थग्रहणोपलम्भात् ॥ ३६२२ ॥

एतदेव स्पष्टयन्नाह—**अन्योन्यपरिहारेणे**त्यादि ।

**अन्योन्यपरिहारेण स्थितलक्षणतोऽथवा ।**
**एकस्मिन्न सह स्थानं विरोधस्तेषु सम्भवेत् ॥ ३६२३ ॥**
**एकज्ञानावभासित्वं नतु तेषां विरोधिता ।**
**शुच्यशुच्यहिशिख्यादेश्चक्षुषा सकृदीक्षणात् ॥ ३६२४ ॥**

द्विविध एव हि भावानां विरोधः परस्परपरिहारस्थितलक्षणता सहानवस्थानता च । तत्र ये परस्परपरिहारेण स्थितलक्षणास्तेषामैक्यं विरुद्धम् । ये तु सहानवस्था-

थिनस्तेषामेकदेशावस्थानं विरुद्धम् । न चैकविज्ञानभासनादेषामैक्यमेकदेशत्वं वा प्रसज्येत । तेन नैकविज्ञानभासित्वेनैषां विरोधः । दृष्टं च विरुद्धानामपि सतामेकज्ञानभासनम् । यथा शुच्यशुचिनोश्चक्षुर्ज्ञानेन परस्परपरिहारस्थितलक्षणयोरहेर्मयूरस्य च सहानवस्थायिनोर्युगपद्ग्रहणम् । आदिशब्देन छायातपादीनां ग्रहणम् । यदि तर्हि विरुद्धानामप्येकज्ञानावभासनमविरुद्धम् ॥ ३६२३ ॥ ३६२४ ॥

एवं सति सुखदुःखयो रागद्वेषयोरेकज्ञानभासनं प्राप्नोतीत्याशङ्क्याह—**सुखे**त्यादि ।

**सुखदुःखादिभेदे तु यत्सकृन्नास्ति वेदनम् ।**
**हेत्वभावादसान्निध्यात्तज्ज्ञेयं न विरुध्यते ॥ ३६२५ ॥**

**तज्ज्ञेय**मिति । यत्सुखादीनां सकृदवेदनं तत्कारणाभावेनानुत्पत्तेरसन्निहितत्वात्, तत् (नतु?) विरुद्धत्वादित्येवं ज्ञेयम्—बोद्धव्यमित्यर्थः । एतदुक्तं भवति—कारणवैकल्यादसान्निध्यं तत्र कारणं न परस्परविरोध इति ॥ ३६२५ ॥

येषां च वास्तवो विरोधो नतु शुच्यशुच्यादिवत्कल्पनाकृतस्तेषामप्येकज्ञाने भासनमस्तीति दर्शयति—**नीलपीते**त्यादि ।

**नीलपीतावदातादिरूपभेदाविरोधिनः ।**
**देशप्रकृतिभेदेपि(न?) वीक्ष्यन्ते युगपद्यतः ॥ ३६२६ ॥**

देशप्रकृतिभेदेन विरोधिन इति सम्बन्धः । तत्र देशभेदस्तदतद्देशत्वम् । प्रकृतिभेदो नीलपीतादिस्वभावत्वम् । यद्वा नीलाद्युपादानकारणत्वम् ॥ ३६२६ ॥

यच्चोक्तम्—भूतं भवद्भविष्यतीत्यादि, तत्राह—**एकज्ञाने**त्यादि ।

**एकज्ञानक्षणव्याप्तनिःशेषज्ञेयमण्डलः ।**
**प्रसाधितो हि सर्वज्ञः क्रमो नाश्रीयते ततः ॥ ३६२७ ॥**

**अत्र केचि**त्स्वयूथ्या एव विज्ञानवादिमतमुपोद्बलयन्तश्चोदयन्ति—यदि युगपदेकज्ञानक्षणेन (अ)विशेषं ज्ञेयमण्डलं व्याघा(प्य?)ते, तदा भावनानि यत्ता(भावानामियत्ता?)परिच्छेदादानन्त्यमभ्युपेतं बाध्येत । तथा ह्येकज्ञानारूढाद्भावादन्यो भावो नास्तीत्येवं परिच्छिद्यमानाः कथमन्तवन्तो न भवेयुः । आह च—"एकज्ञानसमारूढाद्यान्यो भावोऽस्ति कश्चन । इयन्त इति विज्ञानादन्तवन्त" इति । ततश्च क्रमपक्षे यो दोषः स युगपज्ज्ञानपक्षेऽपीति । **तदेत**दसारम् । यदि तावन्निराकारविज्ञानवादिमतमाश्रित्य चोद्यते तदा सर्वमसङ्गतम् । तथाहि—यावत्किञ्चिद्वस्तु

ज्ञानं(तं?) सत्तामनुभवति । तस्य सर्वस्य सत्तामात्रेण सर्वज्ञचेतसा परिच्छेदात्तेन तद्व्याप्तमिति व्यपदिश्यते, नतु पटेनेव घटानां देशपर्यन्ततया व्याप्तेः । न चैकेन ज्ञानेन परिच्छिन्नानीत्येतावता वस्तूनामात्मस्वभावहानिः । येन तान्येकज्ञानपरिच्छेदवशादनन्तत्वमात्मस्वभावं जह्युः । नहि नीलपीतादयो भावा बहवो युगपच्चित्रास्तरणादिष्वेकज्ञानक्षणावसीयमानतनवोऽनेकत्वं जहति । नापि परस्परमन्वाविशन्ति । अपितु यथैव सन्ति तथैव ज्ञानेन परिच्छिद्यन्ते । नान्येन रूपेण । तद्वत्सत्त्वभाजनलोकोऽपि यथैव सत्तामनुभवति तथैव सर्वज्ञचेतसा गृह्यते । अपर्यन्तश्च दिक्षु विदिक्षु सत्त्वादिलोकोऽवस्थित इत्यपर्यन्त(त)या तस्य ग्रहणं नतु पर्यन्तवर्त्तितयेति कुतोऽन्तवत्त्वप्रसङ्गः । **स्यादेत**त्सकलग्रहणाभ्युपगमे कथं पर्यन्तग्रहणं न स्यादिति । **नैतदस्ति** । कोह्यत्र प्रतिबन्धो यत्र साकल्यग्रहणं तत्रावश्यं पर्यन्तग्रहणमिति । तथाहि—यावन्तस्ते सन्ति भावास्तेषां मध्ये नैकोऽपि सर्वज्ञज्ञानाविदितस्वरूपः सत्तामनुभवति । अपितु सर्व एव सर्वज्ञचेतसा विदितस्वरूपा एवोदयन्ते व्ययन्ते च, नैकोऽपि परित्यक्त इत्ययं सकलग्रहणस्यार्थः । इयमेव च तेषामेकज्ञानेन व्याप्तिः । अन्यथा सकलशब्दवाच्यत्वमपि तेषां नाङ्गीकर्त्तव्यं माभूदन्तवत्त्वप्रसङ्ग इति यत्किंचिदेतत् । **यच्चोक्त**मेकज्ञानारूढाद्भावादन्यो नास्तीत्येवं परिच्छेदात्कथमन्तवन्तो न भवेयुरिति, **तदप्यसम्यक्** । नहि निराकारज्ञानवादिपक्षे ज्ञानात्मनि भावानामारोहणमस्ति । अपि तु सत्तामात्रेण तेन निवेद्यन्ते । नापि भावानां ज्ञानापरिच्छेद्यस्वभावतयाऽनन्तत्वमभ्युपेतम्, येन ज्ञायमानतया तेषामन्तवत्त्वं प्रसज्येत । किन्तु देशवितानापर्यन्ततयाऽनन्तो भाजनलोकः । सत्त्वलोकस्तु सङ्ख्यानापर्यन्ततयाऽपि । न च देशावष्टम्भाय पर्यन्तत्वे(ऽ) सति ग्राह्यविरोधः कश्चिद्येनाग्राह्यता भवेत् । यदि पर्यन्ततया न संगृह्णाति कथं सर्वज्ञः स्यादिति चेदत एव । यत एवासौ पर्यन्ततया न गृह्णाति तत एव सर्वज्ञो भवति । अन्यथाऽनन्तं वस्त्वन्तवत्त्वेन गृह्णन् भ्रान्तो भवेत् । तथाहि—यदस्ति तदस्तित्वेन यन्नास्ति तन्नास्तित्वेन गृह्णन्सर्वविदुच्यते । न च सत्त्वभाजनलोकस्य पर्यन्तोऽस्ति । तस्मात्पर्यन्तं गमनकृत(मविद्यमान)मविद्यमानतया गृह्णन्सर्वज्ञज्ञानपरिच्छेदकृतं तु पर्यन्तं विद्यमानं विद्यमानतया पश्यन्कथमसर्वज्ञो नाम । **स्यादेतत्**—निराकारज्ञानपक्षे विषयग्रहणमनुपपन्नं सर्वत्राविशिष्टत्वात्तस्य । तेन प्रतिकर्म(पन्न?)विभागानुपपत्तेरतो निराकारपक्षोऽनुपन्यसनीय एव । सर्वदा तस्य द्व(दु?)ष्टत्वादिति । **तदेतदसम्यक्** ।

नहि सर्वज्ञज्ञानस्य प्रतिकर्म(पन्न?)विभाग इष्यते, तस्य सर्ववस्तुविषयत्वात्, यतो न तन्नीलस्यैव संवेदनं पीतस्यैव वा, अपि तु सर्वस्यैवेतीष्टम् । यस्य ह्यर्वाग्दर्शनस्य ज्ञानं प्रतिनियतार्थविषयं तं प्रति निराकारज्ञानपक्षे सर्वत्राविशेषात्प्रतिपन्नविभागानुपपत्तिर्दोष उच्यते । तथाहि नीलस्येदं संवेदनं न पीतस्येति नियमाभावात् सर्वस्य पृथग्जनस्य सर्वज्ञत्वप्रसङ्गापादनं क्रियते । सर्वज्ञस्य तु तदिष्टमेवेति कस्य किमनिष्टमापद्यताम् । तेन सर्वज्ञावस्थायां निराकारं योगबलेनोत्पद्यमानमविरुद्धमेव । **विभागेन** हेयोपादेयवस्तुपरिज्ञानं न स्यादिति चेत् । **न** । यदि हि युगपदनन्ते वस्तुनि प्रतिभासमाने हेयोपादेयवस्तुनः प्रतिभासविरोधः स्यात्, अविरोधे चान्यैः प्रतिभासमानस्य तस्य हेयोपादेयवस्तुनः तत्त्वप्रच्युतिः स्यात्, प्रच्युत(त)त्त्वस्यापि विभागेनावभास(न)मेव वा न स्यात्, वि(नि?)रुक्तावभासनस्यापि यदि परिच्छेदकः शुद्धलौकिको विमर्शप्रत्ययः पृष्ठभावी नोत्पद्यते तदैतत्सर्वं स्याद्वक्तुम् । यावता विश्वस्मिन्जगत्यवभासमाने तदपि हेयोपादेयं वस्त्वविरुद्धप्रतिभासमप्रच्युतात्मतत्त्वं निरुक्तमेवावभासते । पश्चाच्च सर्वज्ञज्ञानबलोत्पन्नशुद्धलौकिकप्रत्यवमर्शप्रत्ययेन परिच्छिद्यत एवेति कथं विभागेन तदपरिज्ञानं नाम । तदेवं निराकारज्ञानपक्षे तावद्चोद्यमेतदिति प्रतिपादितम् ।

अथ साकारज्ञानवादपक्षे चोद्यते । तत्राप्यविरोध एव । तथाहि—यथैव तदनन्तं वस्त्वनन्ताकारानुगतमात्मसत्त्वं सत्ता मनुभवति तथैव तत्सार्वज्ञं चेतोऽपरिमितवस्तुगताकारोपग्रहेणोत्पद्यमानमविरुद्धमेव । एकस्य ज्ञानस्यानेकवस्त्वाकारोपग्रहेणोत्पत्त्यविरोधात् । एकस्यानेकाकारविरोध एवेति चेन्न । आकाराणामसत्यत्वात् । यदि ह्येकस्य पारमार्थिका आकारा भवेयुस्तदा स्याद्विचित्रत्वविरोधः, यावता अस्य(स्व?)भूता एवाकारा इतीष्टम् । यद्येवं भ्रान्तज्ञानसङ्गित्वा(त्) भ्रान्तः प्राप्नोति सर्वज्ञ इति चेन्न । यथाभूतपरिज्ञानाददोष एषः । यदि ह्यसत्यं सत्यत्वेन गृह्णीयात्तदा भ्रान्तः स्यात्, यदा त्वसत्यभूतानाकारानसत्यत्वेनैव जानाति तदा कथं भ्रान्तो भवेत् । अथाव्यतिरिक्तज्ञानारूढाकारग्रहणे सत्यर्थेषु दृष्टादिव्यवहारं कुर्वन्कथं (अ)भ्रान्त इति चेन्न । सम्यगुपायपरिज्ञानात् । यदि ह्युचितं ग्रहणोपायमपास्योपायान्तरेणामुख्येनार्थं गृह्णीयात्तदा भ्रान्तो भवेत् । यावता साकारज्ञानवादिपक्षे ज्ञानस्याकारानुभवव्यतिरेकेण नान्योऽर्थग्रहणव्यापारोऽस्ति । तत्कथमुचितेन ग्रहणव्यापारेणार्थं गृह्णन्भ्रान्तो भवेत् । अतो ज्ञेयवदेकस्यापि ज्ञानस्यानन्तवस्तुग-

साकारोपग्रहेणोत्पत्तेरनन्तं वस्तु तेन व्याप्तमित्युच्यते । येनैव चात्मना ज्ञानात्मनि भावाः समारोहन्ति—तेनैव तत्पृष्ठभाविपरामर्शचेतसा परिच्छिद्यन्ते नच सार्वज्ञचेतसि परिमितभेदानुगताः समारोहन्ति भावाः । किं तर्हि ? । यावत्किंचिदस्तित्वमनुभवति तत्सर्वमेव समारोहति । सर्वस्यैव सर्वज्ञानोपादानं प्रत्यालम्बनभावेनाप्रतिबद्धशक्तित्वात् । मनोविज्ञानस्य च सर्वार्थविषयत्वात् । अतः सार्वज्ञचेतसः (अ)परिमितवस्त्वाकारोपग्रहणेऽननुपपत्तेः, पृष्ठलब्धेन च शुद्धलौकिकेन परामर्शप्रत्ययेन देशपर्यन्तवर्त्तित्वेनापरिच्छेदात्, कथमियन्त इति परिच्छेदो भवेत्, येनान्तवत्त्वं स्यात् । यदि नाम प्रतिभास(मा)नादन्यन्नास्तीत्येवं परामर्शो जातस्तथाऽपि नान्तवत्त्वप्रसङ्गः । तथाहि—यदि प्रतिभासमानमन्तवदेव निर्विकल्पसर्वज्ञचेतसि प्रतिभासेत तदा तत्पृष्ठलब्धेन परामर्शचेतसा अनन्तत्वं भावानां परिच्छिद्येत । तद्व्यवच्छेदाच्चानन्त(त्व)हानिर्भवेत् । यावता परिभासमानं वस्तु सर्वज्ञचेतस्यनन्तमेव प्रतिभासते सर्व(ज्ञ)स्याप्रतिहतशक्तित्वात् । तस्मादन्यदप्रतिभासमानमन्तवदेव । तस्यैव च परामर्शचेतसा व्यवच्छेदः क्रियत इति सुतरामेव भवताऽनन्तत्वं भावानामुपपादितमिति यत्किंचिदेतत् । ये तु पुनः सर्वमेव योगिविज्ञानमनालम्बनं सत्यस्वप्रदर्शनवद्वस्तुसंवादितया प्रमाणमिति प्रतिपन्नास्तान्प्रत्यन्तवत्त्वचोद्यं दूरीकृतावकाशमेवेत्यलं बहुना ॥ ३६२७ ॥

यैः स्वेच्छासर्वज्ञो वर्ण्यते तन्मतेनाप्यसौ न विरुध्यत इत्यादर्शयन्नाह—**यद्यदित्यादि** ।

> **यद्यदिच्छति बोद्धुं वा तत्तद्वेत्ति नियोगतः ।**
> **शक्तिरेवंविधा तस्य प्रहीणाचरणो ह्यसौ ॥ ३६२८ ॥**
> **युगपत्परिपाट्या वा स्वेच्छया प्रतिपद्यते ।**
> **लब्धज्ञानं च सित्त्वो(?)हि सक्षणैर्व्यादिभिः प्रभुः ३६२९**

**यद्वेत्यादिना** क्रमज्ञानपक्षेऽप्यविरोधमाह ।

> **यद्वा षोडशभिश्चित्तैश्चतुःसत्यस्वभावकम् ।**
> **क्रमेण वेत्ति विज्ञेयं सर्वं सर्वविदित्यतः ॥ ३६३० ॥**
> **तत्र तादृशि विज्ञाने क्रमेण भवति प्रभोः ।**
> **लवमात्रोऽपि नापेक्ष्यः किमङ्गाब्दशतावधिः ॥ ३६३१ ॥**

**षोडशभिश्चित्तैरिति** । क्षान्तिज्ञानैः । अष्टौ क्षान्तयो दुःखधर्मज्ञानक्षान्त्यादयः, अष्टौ च ज्ञानानि दुःखधर्मज्ञानादीनीति 'षोडशभिन्नोऽयं सत्याभिसमय' इति वचनात्। **लवमात्रोऽपीति** । काल(कला?)पर्यन्तः क्षणः, विंशक्षणशतमेकस्तत्क्षणः, षष्टित-त्क्षणा एको लव इति समयः । अक्लेत्यामन्त्रणे । अब्द इति संवत्सरपर्यायः ॥ ३६३० ॥ ३६३१ ॥

स्वभावेनाविभक्तेनेत्यादावाह—**स्वभावेनेत्यादि** ।

**स्वभावेनाविभक्तेन यः सर्वमवबुध्यते ।**
**स्वरूपाण्येव भावानां सर्वेषां सोऽवबुध्यते ॥ ३६३२ ॥**

ननु योगिनामनाश्रवं ज्ञानं शास्त्रे सामान्यविषयमेवोपवर्ण्यते, नतु स्वलक्षणवि-षयम्, तत्कथं सामान्यविषयेण योगिचेतसा भावानां स्वरूपाण्येव च बुध्यन्त इत्यत आह—**सा(स्वा?)त्मकेत्यादि** ।

**सा(स्वा)त्मकाक्षणिकादिभ्यो यद्व्यावृत्तं स्वलक्षणम् ।**
**शमोत्प्रेक्षानिमित्तत्वात्सामान्यं तदिहोच्यते ॥ ३६३३ ॥**
**तद्ग्राहकं च विज्ञानं भावनाबलभावि यत् ।**
**योगीशानामभिव्यक्तं तत्स्वलक्षणगोचरम् ॥ ३६३४ ॥**

तदेव हि स्वलक्षणं विजातीयव्यावृत्तमभिन्नाकारप्रत्ययहेतुतया शास्त्रे सामान्य-लक्षणमित्युच्यते, अतस्तद्ग्राहकं योगिज्ञानं भावनाबलेन स्फुटप्रतिभासमुत्पद्यमानं स्वलक्षणगोचरमेवेत्यविरुद्धमेव । तद्यत्सामान्यगोचरं तत्कथं (न) स्वलक्षणग्राहि तद्भवतीति । यच्चोक्तम्—तदेकाकारविज्ञानमित्यादि, तत्सर्वमेतेनैव प्रत्युक्तम्, स्वलक्षणविषयत्वाद्योगिज्ञानस्येति ॥ ३६३३ ॥ ३६३४ ॥

अथ यत्तत्सांवृतं तत्त्वान्यत्वादिभिराकारैरनिर्देश्यं सामान्यमस्माभिरुपवर्णितम्, यच्च परैस्तैर्थिकैः पारमार्थिकमेव प्रकल्पितम्, तद्ग्राहित्वेन योगिज्ञानस्य स्वलक्षण-विषयत्वं साध्यते, तदसिद्धमित्यादर्शयन्नाह—**तत्त्वेत्यादि** ।

**तत्त्वान्यत्वाद्यनिर्देश्यं यत्परैश्च प्रकल्पितम् ।**
**सामान्यं तस्य नैतेन ग्रहणं योगिचेतसा ॥ ३६३५ ॥**

आदिशब्देन नित्यत्वादिभिरनिर्देश्यमिति ग्रहीतव्यम् ॥ ३६३५ ॥

कस्मात्तेन तस्य ग्रहणं नास्तीत्याह—**अविकल्पमित्यादि** ।

**अविकल्पमविभ्रान्तं तद्योगीश्वरमानसम् ।**
**विकल्पविभ्रमाक्रान्तं तद्ग्रहे च प्रसज्यते ॥ ३६३६ ॥**

योगिज्ञानमविकल्पाभ्रान्ततया प्रत्यक्षं प्रमाणमिष्यते । यदि च तद्यथोक्तसामान्यविषयं स्यात्तदा सांवृतार्थविषयत्वाद्विकल्पाक्रान्तं प्राप्नोति । परपरिकल्पितालीकसामान्यविषयत्वाद्विभ्रमाक्रान्तं च प्रसज्यते । यद्वा—प्रत्येकमुभयविषयत्वे दोषद्वयमापतति ॥ ३६३६ ॥

एवमध्यारोपितालीकार्थविषयत्वाद्विकल्पविभ्रमाक्रान्तं तत्प्रसज्यत इति प्रतिपादितम् । इतश्च विकल्पविभ्रमाक्रान्तं तद्ग्राहि प्रसज्यत इति भङ्ग्यन्तरेण प्रतिपादयन्नाह—विकल्पात्मा चेत्यादि ।

**विकल्पात्मा च सामान्यमवाच्यं यत्प्रकीर्त्तितम् ।**
**नित्यानुगतिरूपं तन्नीरूपं प्रतिपादितम् ॥ ३६३७ ॥**

यदेतदनन्तरोक्तमवाच्यं—तत्त्वान्यत्वाद्यनिर्देश्यं सामान्यमुक्तम्, तद्विकल्पस्यात्मेति यद्यस्मात्प्रकीर्त्तितम्—प्रतिपादितमन्यापोहे । तस्मात्तद्ग्रहे विकल्पविभ्रमाक्रान्तं प्रसज्यत इति प्रकृतेन सम्बन्धः । तथाहि—विकल्पात्मतया सामान्यस्य तद्ग्राहियोगिज्ञानं विकल्पात्मकमेव स्यात् । तादात्म्येनैव तस्य ग्रहणात् । विकल्पस्य च प्रकृत्या स्वप्रतिभासेऽनर्थेऽर्थाध्यवसायेन प्रवृत्तेर्विपर्ययस्तत्त्वमिति विभ्रमाक्रान्तं च प्रसज्येत । यच्च परपरिकल्पितं सामान्यं नित्यानुगतिरूपं तदपि सामान्यपरीक्षायां नीरूपस्वभावमेव प्रतिपादितमिति तद्ग्रहे स्फुटतरमेव विकल्पविभ्रमाक्रान्तत्वमासज्यते ॥ ३६३७ ॥

यच्चोक्तम्—सहेतु सफलं कर्मेत्यादि, तत्राह—सहेत्वित्यादि ।

**सहेतु सफलं कर्म ज्ञानेनालौकिकेन यः ।**
**समाधिजेन जानाति स सर्वज्ञोऽपदिश्यते ॥ ३६३८ ॥**
**पुरस्तादनुमानेन तस्य सत्ता प्रसाधिता ।**
**प्रमाणमस्य सद्भावे तदस्तीत्यस्ति तादृशः ॥ ३६३९ ॥**

युगपत्परिपाट्या चेत्यादावाह—युगपदित्यादि ।

**युगपत्परिपाट्या वा ज्ञानं कार्यात्प्रकाशितात् ।**
**सामर्थ्यमपि तस्यास्ति देशनां कुरुते यदा ॥ ३६४० ॥**

सुबोधम् ॥ ३६४० ॥

लब्धासाधारणोपाय इत्यादावाह—**स्वभ्यस्तधर्मनैरात्म्येत्यादि** ।

**स्वभ्यस्तधर्मनैरात्म्या यस्येयं देशनाऽमला ।**
**साधिता सर्वशास्त्रेषु(ण?) सर्वमानैरबाधिता ॥ ३६४१ ॥**
**संसार्यनुचितज्ञाना केशवादेरगोचरः ।**
**शिरोभिरर्च्यते शक्त्या याचातीव मनीषिभिः ॥ ३६४२ ॥**
**समस्तदुरितारातिवर्गभङ्गविधायिनी ।**
**चित्राभ्युदयनिष्पत्तिनिर्वाणप्राप्तिकारणम् ॥ ३६४३ ॥**
**लब्धासाधारणोपायोऽशेषपुंसां विशेष(लक्ष?)णः ।**
**स एकः सर्वविन्नाथ इत्येतत्सप्रमाणकम् ॥ ३६४४ ॥**

**सर्वशास्त्रेणे**ति। सकलेनामुना तत्त्वसङ्ग्रहेण। **संसार्यनुचितज्ञाने**ति । संसारिणामनुचितमसहजं संसार्यनुचितं तत्तादृशं ज्ञानं यस्यां देशनायां सा तथोक्ता । **केशवादेरगोचर** इति । स्वलिङ्गेनैव देशनासमानाधिकरणमेतत् । **समस्तदुरितारातिवर्गभङ्गविधायिनी**ति । दुरितान्येवारातयस्तेषां वर्गः समूहस्तस्य भङ्गं विधातुं शीलमस्या इति विग्रहः । **चित्राभ्युदयनिष्पत्तिनिर्वाणप्राप्तिकारण**मिति । कारणशब्दः प्रत्येकमभिसम्बध्यते । चित्राभ्युदयनिष्पत्तिकारणं निर्वाणप्राप्तिकारणं चेत्यर्थः ॥ ३६४१ ॥ ३६४२ ॥ ३६४३ ॥ ३६४४ ॥

इत्थं यदेत्यत्राह—**इत्थमित्यादि** ।

**इत्थं यदा च सर्वज्ञः कश्चिदेवोपपद्यते ।**
**धर्माद्यधिगमे हेतुः पौरुषेयं तदा वचः ॥ ३६४५ ॥**

**कश्चिदेवे**ति । सुगत एव, न कपिलादिः । यथोक्तं प्रागित्यभिप्रायः । यश्च निराकारसाकारज्ञानविकल्पेन दोष उक्तस्तथा(त्रा?)पि पूर्वमेवास्माभिः प्रतिविहितम् । तत्तु(त्र?)चोक्तम्—"सनिर्भासमनिर्भासमन्ये निर्भासमेव च । विजानन्ति न विज्ञानबाह्यमर्थं कथंचन ॥" इति ॥ ३६४५ ॥

तत्कथमुभयपक्षाश्रयणेऽपि दोषाप्रसङ्ग उच्यत इत्येतदाशङ्क्याह–(**निराकारादी**ति)।

**निराकारादिचिन्ता तु सर्वज्ञे नोपयुज्यते ।**
**यथाहि भवतां ज्ञानं कश्चिदर्थे तथा परम् ॥ ३६४६ ॥**

## इत्यतीन्द्रियदर्शिपुरुषपरीक्षा ।

## शान्तरक्षितविरचितस्तत्त्वसङ्ग्रहः समाप्तः ।

येयमस्माभिर्विज्ञानवादस्थितैर्निराकारचिन्ता प्रागकारि सा साम्प्रतं बाह्यार्थाभिनिविष्टान्भवतो मीमांसकान्प्रति बहिरर्थमभ्युपेत्य सर्वज्ञे प्रतिपाद्यमाने भवतां बहिरर्थवादिनां कथमपि नोपयुज्यत एव कर्तुम् । कथमित्याह—**यथार्हीत्**यादि । अवश्यं हि भवद्भिर्बहिरर्थस्य साकारेण वा निराकारेण वा ज्ञाने ग्रहणमुपवर्णनीयम् । अन्यथा बहिरर्थोच्छेदः स्यात् । ततश्च यथा येन प्रकारेण भवतां कचिदर्थे ज्ञानं प्रवर्त्तते तथा तेनैवाकारेण परम्—उत्कृष्टम्, सार्वज्ञं (इति) सम्बध्यते, प्रवर्त्तिष्यते इत्यचोद्यमेतदिति ॥ ३६४६ ॥

इति कुशलमदभ्रं यन्मयाप्रापि शुभ्रं
निरुपमजिनलक्ष्मीसद्यतामेत्य नित्यम् ।
सकलजनमनांसि प्रीणयन् दीप्तकान्तिः
सुगतकमलशीलस्तेन सर्वोऽस्तु लोकः ॥

## इत्यतीन्द्रियदर्शिपुरुषपरीक्षा ।

कमलशीलविरचिता पञ्जिका समाप्ता ।

---

# आकरानुक्रमणिकायां विहितानां निबन्धसंज्ञानां सूची ।

---

| | | |
|---|---|---|
| अ. प्रज्ञा. | अष्टसाहस्रीप्रज्ञापारमिता | Asiatic Society of Bengal, Calcutta. |
| आप. श्रौ. सू. | आपस्तम्बश्रौतसूत्र | |
| ऋ. वे. | ऋग्वेद | |
| का. लं. | काव्यालङ्कार by भामह | Published along with Pratâparudrayaśobhûshana in the Bombay Sanskrit Series. |
| न्या. द. | न्यायदर्शन by गौतम | |
| न्या. बि. | न्यायबिन्दु by धर्मकीर्ति | Asiatic Society of Bengal, Calcutta. |
| न्या. वा. | न्यायवार्त्तिक by उद्योतकर | ,, |
| पा. सू. | पाणिनिसूत्र | |
| प्र. स. | प्रमाणसमुच्चय of दिङ्नाग | |
| बृ. उ. | बृहदारण्यकोपनिषत् | |
| भा. व. | महाभारत-वनपर्व | |
| म. भा. | महाभाष्य of पतञ्जलि | |
| मी. द. | मीमांसादर्शन of जैमिनि | |
| मी. भा. पू. | मीमांसासूत्रभाष्य of शबरस्वामी-पूर्वषट्क | Asiatic Society of Bengal, Calcutta. |
| वा. प. | वाक्यपदीय of भर्तृहरि | Chowkhamba Sanskrit Series, Benares. |
| वै. द. | वैशेषिकदर्शन by कणाद | |
| वै. द. भा. | वैशेषिकदर्शनभाष्य by प्रशस्तपाद | Vijayanagaram Sanskrit Series, Benares. |
| श्लो. वा. | श्लोकवार्त्तिक by कुमारिल | Chowkhamba Sanskrit Series, Benares. |
| स. द. सं. | सर्वदर्शनसङ्ग्रह by माधवाचार्य | Anandasram Sanskrit Series, Poona. |
| सा. का. | साङ्ख्यकारिका of ईश्वरकृष्ण | |

---

# तत्त्वसंग्रहस्थकारिकाणामनुक्रमणिका ।

ई

द

**प**

# तत्त्वसंग्रहे निबन्धकारेण स्वकृतेरविभागेन ग्रथितानां परवचनानामनुक्रमणिका ।

† इदं चिह्नं आकरस्थपाठान्तरस्य ज्ञापकम् ।

* इदं वचनं विद्यानन्दस्वामिना प्रमाणपरीक्षायामनूदितम् (सनातनजैनग्रन्थमाला दशमाङ्के पत्र ७२)

# तत्त्वसङ्ग्रहपञ्जिकायामनूदितानां वचनानाम-करादिक्रमेणाकरानुक्रमणिका

† एतदङ्काङ्कितं आकरनिबन्धस्थं पाठान्तरं तत्र तत्र बोध्यम् ।



---

* इदं च वचनं विद्यानन्दापरनामकपात्रकेसरिस्वामिविरचितायामाप्तमीमांसाव्याख्यायां धर्मकीर्त्तेर्वचनमित्यनूदितम् । Satischandva Vidyabhush and's Indian Logic, p. 187-btn, 1.

* आदर्शे पुस्तके पाठक्रमभेदः पाठभेदश्च

‡ उपवहाय उदकं पिबेदित्यादिः पाठभेद आदर्शपुस्तके

¶ आदर्शपुस्तके तु पाठभेदो वर्तते

| पत्र | पंक्ति | | निबन्ध. | कर्त्ता. |
|---|---|---|---|---|
| २०५ | १३ | एकस्मिन्नवयवि० नि...नुपपन्नौ | *न्या०वा०पत्र०२१६.प०१६ | उद्योतकरः |
| ५७ | १० | एकाधिष्ठाना...पारतन्त्र्यम् | | प्रशस्तमतिः |
| १२६ | ६ | एकः पुद्गलः...तथागतः | | |
| ५२३ | २२ | एतावानेव पुरुषो | | |
| १९२ | २६ | एवं धर्मैर्विना...कृतः | | |
| ३८६ | १७ | एवं समानेऽपि...प्रसिद्धम् | श्लो० वा० प० २०७ | कुमारिलः |
| ७१३ | २१ | एवं साधौ प्रयोक्तव्ये | वा०प०का० १ पत्र०६ | भर्तृहरिः |
| ८८ | १९ | एवमपि यथोक्त...अनैकान्तिकः | | भाविविक्तः |
| १८४ | १९ | एवमस्य केवलस्य...भवति | | |
| ५८३ | १८ | एषामैन्द्रियक | श्लो० वा० प० ४९ | कुमारिलः |
| | | **क** | | |
| ५०५ | १७ | कतमद्द्वयं चक्षूः...धर्माः | | भगवान् |
| ५६१ | ११ | कथं तद्ग्राहकं | | शुभगुप्तः |
| १३ | २१ | कथं नु शाश्वतो...सङ्क्रमते | | भगवान् |
| ८९ | २१ | कर्तुः प्रसिद्धिः | पा० सू० २. २. १४ | पाणिनिः |
| ६९३ | १९ | कर्मणि च | | |
| ५२१ | १९ | कायादेव | | |
| ४३० | २० | कार्यकारणभावा | †प्रमाणवार्तिककारिका | धर्मकीर्तिः |
| ४८ | १३ | कार्यत्वान्यत्वलेशे | ×प्र० स० | दिङ्नागः |
| ४७६ | २१ | कार्यादीनामभा० | श्लो० वा० प० ४७४ | कुमारिलः |
| ४०४ | २४ | कृतकत्वाद्ध्वनि | | |
| ८१९ | २७ | कृत्यल्युटो | पा० सू० ३. ३. ११३ | पाणिनिः |
| १४२ | १० | क्षणिक इतिमत्व...युक्तम् †यश्चायं क्षणिक इति मत्वर्थीयः | न्या० वा० प० ४१८ | उद्योतकरः |
| ११ | ५ | क्षणिकाः सर्वसंस्काराः | | |

* आदर्शे मुद्रिते पुस्तके पाठक्रमे भेदो दृश्यते.

‡ विज्ञायते चैतत् सतीशचन्द्रविद्याभूषणभट्टाचार्यस्य लेखे. History of Indian Logic p. 376.

× विज्ञायते चैतत् तत्रैव Ibid p. 135.

¶ एतद्वचनग्रहणतः समनन्तरं—तथाऽपरमुक्तमिति धर्मकीर्तेर्वचनं गृहीतं ततो विज्ञायते धर्मकीर्तेरेतद्वचनमिति

‡ See Systams of Buddhistic Thought by Yamakami Sōgen, p. 19 for an English rendering of this S'loka.

§ अयं कुण्डलान्तर्गतः पाठ आदर्शपुस्तके नास्ति

* इदं चाविद्धकर्णवचनं सम्मतितर्कटीकायां (अमदावाद गुजरात पुरा तत्त्वमन्दिरे) मुद्रितायां प्रथमे काण्डे १०० पत्रे एकानुपूर्वीकमनूदितं, ततो विज्ञायते स ईश्वर इत्यन्तमेतद्वचनमिति

| पत्र | पंक्ति | | निबन्ध. | कर्त्ता. |
|---|---|---|---|---|
| ५८२ | १ | धीमात्रत्वेन | | भदन्तशुभगुप्तः |
| १३ | ३ | धूमेन ज्ञायते | | भगवान् |
| | | **न** | | |
| १५५ | १३ | न किंचिदेक | | |
| ४३६ | ४ | नच स्वर्गकामो...ज्ञातुम् | मी०भा०पू०प० ४ | शबरस्वामी |
| ६४४ | २३ | | | |
| ६५३ | ६ | | | |
| ४३० | १९ | नचादर्शनमात्रेण | ‡प्रमाणवार्तिककारिका ? | धर्मकीर्तिः ? |
| ४४० | १९ | नचानेकेन्द्रिय | श्लो० वा० प० १८६ | कुमारिलः |
| ५८९ | ६ | नचास्य चोदना...बाध्येत | मी०भा०पू०प० १३ | शबरस्वामी |
| २७७ | २७ | न जातिशब्दो | | दिङ्नागः |
| ७३९ | २१ | न नर्मयुक्तं | | |
| २५५ | १६ | ननु च प्रागभावादौ | श्लो० वा० प० ५६९ | कुमारिलः |
| ४३२ | २२ | ननु वा प्रमाणेन...प्रयोजनम् | तत्वटीका | अविद्धकर्णः |
| ८६५ | १६ | नन्वज्ञानेन | | |
| ४४१ | ६ | न प्रमाणान्तरं | | |
| २५७ | २७ | न साबलेयात् | श्लो० वा० प० ६२४ | कुमारिलः |
| ६८ | ८ | न सोऽस्तिप्रत्ययो | वा०प०का०१.प० ४६ | भर्तृहरिः |
| ७० | १३ | | | |
| ३०८ | १३ | नहि तत्केवलम् | | |
| ९८ | २२ | नहि तत्क्षणमप्यास्ते | | |
| ७७१ | ८ | | | |
| २५१ | ५ | नहि सर्वत्र निमित्ता...प्रत्ययः स्यात् | | भाविविक्तः |
| ७४५ | २४ | नहि स्वतोऽसती शक्तिः | | |
| ८१३ | २१ | | | |
| ६६ | १४ | न हेतुरस्तीति वदन् | | आचार्यसूरिपादः |
| ८२३ | ३ | नह्येकं नास्ति | | |
| ६३६ | ६ | नादैराहित | वा०प०का०१प० ३२ | भर्तृहरिः |

‡ धर्मकीर्तिवचनतयावगतेन कार्यकारणभावाद्वेति श्लोकेनास्य समानकर्तृकत्वावगमाद्धर्मकीर्तेरिति सम्भाव्यते

‡ Bibl. Indica इत्यस्यां ग्रन्थमालायां मुद्रिते न्यायबिन्दावयं पाठो नोपलभ्यते ।

| पत्र | पंक्ति | | निबन्ध. | कर्ता. |
|---|---|---|---|---|
| | | **भ** | | |
| १४ | ४ | भस्मीभूतस्य | | चार्वाकाः |
| १३० | १ | भारं वो भिक्षवो...पुद्गलाः | | भगवान् |
| ,, | १४ | भारहारः कतमः | | ,, |
| ८६१ | ९ | भावे किं...संशयोऽस्तु | | आचार्यः ? |
| ४२ | २२ | भुवनहेतवः...दिवत् | *न्या० वा० प० ४६१ | उद्योतकरः |
| २० | २५ | भेदानां परिणामात् | सा० का० श्लो० १५ | ईश्वरकृष्णः |
| ३१ | ३ | भेदे हि कारणं | | |
| | | **म** | | |
| ४५<br>४१ | ७<br>२४ | महत्यनेक...पलब्धिः | वै० द० ४. १. ६ | कणादः |
| १३ | ६ | मा भिक्षवः...मादृशः | | भगवान् |
| ५८२ | २१ | माऽभूत् सर्वथा...प्रत्ययाः | | दिङ्नागः |
| २१६ | २४ | मालादौ च महत्त्वा० | | |
| ,, | २० | मालाबहुत्वे तच्छ० | | |
| १८३ | २५ | मिथ्याऽध्यारोप० | | |
| २२ | २२ | मूलप्रकृतिरविकृ० | सा० का० श्लो० ३ | ईश्वरकृष्णः |
| | | **य** | | |
| ५८३ | १० | य एव श्रेयस्कर...च्यते | मी० भा० पू० प० ६ | शबरस्वामी |
| ३७२ | २५ | यज्ज्ञानमर्थे...प्रत्यक्षम् | ‡न्या० प्र० प० ७ | दिङ्नागः |
| १३ | २ | यत्किञ्चिद्भिक्षवः | | भगवान् |
| ६५५ | १९ | यत्तु लौकिकं...मेव तत् | मी० भा० पू० प० ५ | शबरस्वामी |
| ६६८ | ८ | यत्र स्वातन्त्र्यमिच्छाया | | |
| ४११<br>४१२ | १८<br>५ | यत्राप्य...पक्षः | | आचार्यः ? |
| ५३ | २० | यथा बुद्धि...मस्ति | न्या० वा० प० ४६८ | उद्योतकरः |
| ७२ | १९ | यथा विशुद्धमाकाशं | | |
| ५८२ | ११ | यदन्तर्ज्ञेयरूपं तु | (आलम्बनपरीक्षा ?) | दिङ्नागः |
| ७८७ | ९ | यदा क्षुदादि...मन्येमहि | मी० भा० पू० प० ९ | शबरस्वामी |

* आदर्शन्यायवार्तिकपुस्तके प्रधानपरमाणुकर्माणीत्यारभ्य पाठान्तरं दृश्यते ।

‡ आदर्शपुस्तके पाठभेदो दृश्यते । Nyāyapraves'a is being printed in the Gaekwar's Oriental Series Baroda.

| पत्र. | पंक्ति | | निबन्ध. | कर्त्ता. |
|---|---|---|---|---|
| ३२० | १ | यदि शब्दस्यापोहो...मिधत्ते | न्या० वा० प० ३३३ | उद्योतकरः |
| २७८ | २ | यदि शब्दान्...नन्त्यं | ,, प० ३२७ | ,, |
| ३६९ | २३ | यदृच्छाश...विषाणी | वृत्तिग्रन्थ | आचार्य ( दिङ्नागः ) |
| २२ | २६ | यदेव दधि तत्क्षीरं | | |
| ५५ | ४ | यद्यपि नित्य...हेतोः† | | उद्योतकरः |
| ५८२ | १६ | यद्यपीन्द्रियविज्ञप्तेः | | शुभगुप्तः |
| २८१ | २४ | यया जाति...व्यूहात् | न्या० भा० पत्र० १४६ | वात्स्यायनः |
| ८३१ | २१ | यः सत्यवाक् सत्य...तव्यः | उपनिषत् ( छान्दोग्य ?) | |
| २७८ | ४ | यस्य निर्विर्शे...नन्त्यम् | *न्या० वा० प० ३२६ | उद्योतकरः |
| ८४३ | १३ | यस्यां रात्रौ...शृण्वन्ति | | |
| ६०२ | ९ | यस्याप्यभिव्य...पलभ्यन्ते | मी० भा० पू० प० ३० | शबरस्वामी |
| १८३ | २४ | यावच्चात्मनि न प्रेम्णो | | |
| २१० | ४ | युगपज्ज्ञाना...लिङ्गम् | न्या० द० १६. १. १. | गौतमः |
| १५ | १८ | युष्माभिरेव कर्त्तव्यम् | | भगवान् |
| २७५<br>१२ | २७<br>११ | येन येन हि नाम्ना वै | | तायी भगवान् |
| १६२ | १३ | ये रूपत्वादि...दिवत् | | भाविविक्तन् |
| १३० | १५ | योऽसावायुष्मन्...दीर्घायुः | | भगवान् |
| | | **र** | | |
| ५९ | २६ | रजो जुषे जन्मनि | कादम्बरी | बाणः |
| २११ | ६ | रूपरसगन्ध...गुणाः | वै० द० १. १. ६ | कणादः |
| ४१ | २५ | रूपसंस्काराभावात् | वै० द० ४. १. ७ | कणादः |
| ४२८ | ८ | लिङ्गलिङ्गिधियोरेवं | | |
| | | **व** | | |
| ११६ | ७ | वत्सविवृद्धिनिमित्तं | सा० का० श्लो० ५७ | ईश्वरकृष्णः |
| ६३० | २३ | वर्णानामपि...भागाः | | |
| ६८६ | ८ | वायवीया...नोपलभ्यन्ते | मी० भा० पू० प० ३१ | शबरस्वामी |
| ६३६ | ४ | वायुरापद्यते...वानिति | | शिक्षाकाराः |
| ५१९ | २१ | विकल्पः स्वयमेव | | |

* आदर्शे न्यायवार्त्तिकपुस्तके तु यो हि सच्छब्देनेत्यादिः पाठभेदो दृश्यते ।

| पत्र. | पंक्ति | | निबन्ध. | कर्ता. |
|---|---|---|---|---|
| ३२८ | १० | संसृज्यन्ते न भि० | | |
| ७८१ | ४ | स खलुप्रत्यक्षं...नाति-पतति | | आचार्य (?) |
| ४४२ | १७ | सङ्केतापेक्षया तस्य | | |
| २१२, २३२, ४५ | १५, १, ५ | सङ्ख्यापरिमाणा...चाक्षुषाणि | वै० द० ४. १. ११ | कणादः |
| ११ | १ | सचायमङ्कु...समुत्पन्नः | | भगवान् |
| ३८३ | ३ | सत्तादिसामान्य...विषयत्वम् | | सुमतिः |
| ३३ | ७ | सत्तास्वकरणाश्लेष | | |
| ९८, १७९, ७७० | २१, २२, २५ | सत्संप्रयोगे पुरुष | मी० द० १. १. ४ | जैमिनिः |
| ८० | १३ | सदाद्यविशेषविषय...घटादयः | | प्रशस्तमतिः |
| ४४ | ११ | सदाद्यविशेषास्कन्दिता...रूपादिवत् | | ,, |
| १४० | ८ | सधर्मेषु धर्मा...विनिमुक्तः | | भगवान् |
| ५०९ | २५ | सन्नतिकार्यं चेष्टं | | |
| ८२५ | २१ | सपश्यतिदिव्येन...गच्छतः | | |
| ५७ | १९ | सप्तभुवनान्येक...सूत्रधारः | | प्रशस्तमतिः |
| २८२ | ४ | समानप्रसवात्मिकाजातिः | न्या० द० २. २. ७० | गौतमः |
| २ | १३ | सम्बन्धानुगुणोपायं | | |
| ४३ | १ | सर्गादौ पुरुषाणां...पूर्वकः | | प्रशस्तमतिः |
| ३१६ | ११ | सर्वत्राभेदात्...साधुः | | दिङ्नागः |
| ५५९ | १६ | सर्वत्रालम्बनं बाह्यं | श्लो० वा० प० २४२ | कुमारिलः |
| २८५ | २४ | सर्वोमिथ्यावभासो | | |
| ११ | २३ | सर्वं सर्वमिति...धातवः | | भगवान् |
| ५६७ | १७ | सहशब्दश्च लोके | | शुभगुप्तः |
| ,, | १६ | सहोपलम्भनियमात् | *प्रमाणविनिश्चयः | धर्मकीर्तिः |

* एतच्च सतीशचन्द्रविद्याभूषणस्य लेखे विज्ञायते History of Indian Logic p. 308

‡ भट्टकुमारिलेनाप्यनूदितमेतत् श्लो० वा० प० ८७

¶ आदर्शपुस्तके पाठक्रमे भेदः

# तत्त्वसङ्ग्रहपञ्जिकयोः कृतानां ग्रन्थग्रन्थकारादि-निर्देशानां सूची ।



[1] तत्र तत्रोदाहृता इमे आचार्या भिन्नभिन्नाः स्युः । विशेषानिर्धारणादेकस्यां सूच्यां योजिताः ।

# तत्त्वसंग्रहस्य द्वितीयभागस्य शुद्धिपत्रम् ।

| पत्रं. | प. | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ५८५ | १६ | कृतकाकृत | इतरोऽकृत |
| ५९० | ५ | तेऽसत्य | ते सत्य |
| ५९३ | १९ | शब्द | सर्व |
| ,, | २२ | अंशा | अंशो |
| ५९९ | १ | ततः | तत्र |
| ६०१ | ७ | वायू | वाय्व |
| ६०३ | २८ | जातीत्यसंशयः | यातीत्यसंशयं |
| ६०४ | ५ | शार्कि | शक्तिं |
| ,, | १९ | वस्त्व | वाय्व |
| ,, | २० | दिक्काः | दिक्कान् |
| ६१० | १३ | कश्चनन्या | कणभुङ्न्या |
| ६१२ | २१ | तेन | तेना |
| ६१४ | १९ | उर्ध्वं | ऊर्ध्वं |
| ६१५ | २२ | भविष्यति | न भविष्यति |
| ६१६ | ७ | न भिन्न | न भिन्नः |
| ६२४ | ६ | हित (त्) | हि नः |
| ६२७ | १२ | प्रलये | प्रलयो |
| ६३० | १० | क्रमस्यैव | क्रमस्येव |
| ६३४ | १७ | परमार्थं | परार्थं |
| ६३५ | ३ | नरः | परः |
| ६३७ | ६ | साहि | साऽभि |
| ६३८ | १२ | क्षता | क्षताः |
| ,, | १३ | चाद्यपेक्षया | वाद्यपेक्षया |
| ६४० | ११ | ( च्छेद ? ) | |
| ६४१ | २८ | चेह | वेद |
| ६४२ | २२ | कर्तुंश्च | कर्तुं च |
| ६४३ | ११ | न स्मृति | तत्स्मृति |
| ,, | २३ | प्रकृता | प्राकृता |
| ६४४ | ७ | प्रमाणे च | प्रमाणेऽब |
| ६४४ | १९ | योऽनाप्त | योऽनाप्ता |

| पत्रं. | प. | अशुद्धम् | शुद्धम् |
| --- | --- | --- | --- |
| ६४७ | ६ | नरः (वा?) नि | नरनि |
| ६७५ | ११ | व्यर्कि | शर्कि |
| ,, | १२ | न प्र | नेत्रे |
| ,, | १३ | पलव्धो | पलव्धौ |
| ६७९ | १४ | श्रोत्रस्य | श्रोत्रस्या |
| ,, | १५ | सद्धवि | तद्धवि |
| ६८१ | २१ | व्यवधाने | अव्यवधाने |
| ,, | ,, | (णा?) | |
| ६८२ | १२ | स्पष्ट | स्पष्टास्पष्ट |
| ६८५ | १६ | गतिरु | गतेरु |
| ६८७ | २ | व्योमन | व्योमनि |
| ६९१ | ८ | कश्चन | कणभुङ् |
| ६९५ | २५ | मसूर्य | मप्सूर्य |
| ७१३ | १४ | कारितात् | कारिता |
| ,, | २३ | ,, | ,, |
| ,, | २० | अवाश्चेति | अम्बाम्बेति |
| ७२९ | १८ | तादवस्थ्या | तादवस्थ्य |
| ७३० | १४ | वृतस्य नः | वृततवतः |
| ,, | १५ | ज्ञानभवं | ज्ञानमेव |
| ७३१ | ८ | नास्वभावौ | नाशस्वभावौ |
| ७३१ | २६ | नत्वसिद्धं | नन्वसिद्धं |
| ७३९ | २० | बहूनानि | षड्शतानि |
| ,, | २१ | मिस्तुभिः | भित्तिभिः |
| ७४५ | १६ | क्रनेति | क्वेति न |
| ७४६ | २१ | व्यस्थाप्यते | व्यवस्थाप्यत |
| ७५७ | ११ | तव | तत्र |
| ७५८ | १९ | न ते | मते |
| ७५९ | ३ | ऽप्रमाणा | प्रमाणा |
| ७६३ | १२ | ततश्चावस्था | ततश्चानवस्था |
| ७६४ | ७ | दि नाम | यदि नाम |
| ७७१ | ५ | स्यातो | स्य मः |
| ,, | ,, | चेष्टा । | चेष्टा |

| पत्रं. | प. | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ७७१ | ८ | न तल्लक्षण | न हि तल्लक्षण |
| ७७९ | ७ | आये हि | आये ह्य |
| ७८३ | २४ | भवस्था | अनवस्था |
| ७८६ | २१ | तदैव था | तदैव या |
| ७८८ | २३ | हेमृत्व | हेतुत्व |
| ७९२ | ५ | प्राश्रे | प्राप्ये |
| ७९६ | २४ | मभावास्तद | मभावस्तद |
| ८१० | १४ | अप्रवस्य | अप्रतर्क्य |
| ८१६ | १४ | मुरुषादेव | पुरुषादेव |
| ८१९ | २ | परोक्षावि | परोक्षार्थवि |
| ,, | ४ | ज्ञानात्सङ्गी | ज्ञानासङ्गी |
| ८२० | १८ | जगद्गुतः | जगद्गुत |
| ८२२ | १९ | हितोप | प्रतिहृतोप |
| ८२३ | ६ | व्याहर्तुं | व्याहन्तुं |
| ८२५ | २० | एताभ्यां | एवान्यान् |
| ८२६ | ६ | इति यावत् | इति पाठः |
| ,, | ,, | ततो | तद्या |
| ,, | ११ | ( स्मा ) | |
| ८३१ | १८ | कृत्रिमेण च | कृत्रिमेण त्व |
| ,, | २३ | गतोऽर्हन | गतोऽर्हन् |
| ८३३ | ५ | ज्ञेयं तेन | ज्ञेयं तस्य य द्विज्ञानं तेन |
| ,, | ६ | ग्रहणानन्त | ग्रहणनान्त |
| ,, | ११ | पाथिर्ज्ञेय | पाथेर्ज्ञेय |
| ,, | १६ | चरितादि | चरितादेः |
| ,, | ,, | ददेशना | दादेशना |
| ८३८ | ८ | ग्रहणानन्त | ग्रहणनान्त |
| ८४३ | १६ | निःसरतं | निःसरन्तं |
| ८५३ | १२ | एषा चो | एषां चो |
| ८५५ | १५ | च्छेद्याना( न ? ) | च्छेदना |
| ८६६ | ११ | नास्त्यहं | नास्म्यहं |
| ८६९ | २७ | मूत | यथाभूत |
| ८७० | ५ | नायोनिशो | नायोनिशो |
| ,, | ६ | ,, | ,, |

| पत्रं. | प. | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ८७१ | ५ | दृश्यते | दृश्यन्ते |
| ८७२ | ९ | निवेशस्य | निवेशस्य, |
| ८७२ | ,, | संमतत्वात्, | संमतत्वात् |
| ८७५ | १८ | मेषामसिद्धं | मेषां सिद्धम् |
| ८७७ | ५ | त्रियान( नु ) | त्रियान |
| ८८६ | १८ | सर्वात्रसा | सर्वात्रसा |
| ८८८ | २१ | विद्यायां | विद्या या |
| ८८९ | ३ | प्रकृती | प्रभृती |
| ८९० | १ | ध्यानु ( ज्ञातु )म... | ध्यातुमें |
| ८९५ | ९ | प्रकृति | प्रवृत्ति |
| ,, | २० | बलानां | बलेन |
| ८९६ | १२ | महान्मतिः | महात्मभिः |
| ९०३ | १४ | तदज्ञान | तदज्ञात |
| ९१२ | १९ | वादवित् | वादवत् |
| ९१३ | १७ | मलोपेत | मलापेत |
| ९१४ | २४ | यदि | यद्वि |
| ९२३ | ८ | पालक | पत्रक |
| ९२४ | १८ | कल्पस्य | विकल्पस्य |
| ९२५ | २६ | भवत्ये | भवत्वे |
| ९२८ | ५ | लक्षणस्थितेः ॥ ३६१२—३६१९ ॥ | लक्षणस्थितेः । |
| ,, | ७ | यथोक्तम् | यथोक्तम् |
| ,, | ८ | निरुच्यच्यत | निरुच्यत |
| ,, | ,, | इति, वेद | इति ॥ ३६१२—३६१९ ॥ वेद |
| ९३० | २७ | ( पत्र ? ) | |
| ९३१ | १ | ( पत्र ? ) | |
| ९३५ | २३ | तम् । तत्तु ( त्र ? ) | तम् ॥ ३६४५ ॥ ननु |
| ,, | ,, | मन्ये निर्भा | मन्यनिर्भा |
| ,, | ,, | विजानन्ति | विजानाति |
| ,, | २४ | विज्ञान | विज्ञानं |
| ,, | ,, | इति ॥ ३६४५ ॥ | इति, |

## आकरसूच्याम् ।

| पत्रं. | अशुद्धम् | शुद्धम् |
|---|---|---|
| ७९ | Satischandva etc | Satischandra Vidyabhushan's, Indian Logic, p. 187–ftn. |
| ८२ | अ. प्र. पा. परि १६. पत्रं. ३१९ | सद्धर्मपुण्डरीके १३२ पत्रे |
| ९० | न्या. प्र. प. ७ | न्यायमुखे |

---

६४४ पत्रे **तत्कृतः प्रत्यय** इत्यादिश्लोकत्रये प्रलुप्तवाक्यानामापूरणमनवधानकृतम्, श्लोकवार्त्तिकस्य तु तद्। तत् तदनुसारेण त्वेवं पठितव्यम्—

तत्कृतः प्रत्ययः सम्यङ्लिङ्गवाक्योद्भवत्वतः ।
वाक्यबुद्धिवदेवात्र पूर्वोक्ताश्चापि हेतवः ॥
चोदनाजनिता बुद्धिः प्रमाणं दोषवर्जितैः ।
कारणैर्जन्यमानत्वात् लिङ्गाप्तोक्त्यक्षबुद्धिवत् ॥
तथाऽनाप्तप्रणीतोक्तिजन्यत्वाद्बाधवर्जनात् ।
देशकालादिभेदेन चाप्तोक्तिप्रत्ययो यथा ॥

# GAEKWAD'S ORIENTAL SERIES.

**Published under the Authority of the Government of His Highness the Maharaja Gaekwad of Baroda**

AT THE

**CENTRAL LIBRARY, BARODA (India).**

GENERAL EDITOR:

**BENOYTOSH BHATTACHARYYA, M. A., Ph. D.**

---

## Select Opinions.

The Series as a whole will bring notable accession to our knowledge of the immense and wonderful Sanskrit Literature. The volumes are excellently printed and edited, and the notes and introductions are scholarly and useful.

(Dr.) F. W. THOMAS, LIBRARIAN, INDIA OFFICE.

The editions have been executed with the greatest care. The prefaces are learned and informing. They are worthy of the State which published them.

(Mahamahopadhyaya Dr.) Haraprasad Shastri, M. A., C. I. E., Hon. D. Litt.

The inclusion of Prakrit works in the series is an excellent idea. Owing to the practical monopoly of Sanskrit in India, the study of the Prakrits has been too much neglected there, though these mediaeval vernaculars as connecting links between Sanskrit and the innumerable dialects of modern India, are of great philological, and to some extent, literary importance...The Maharaja is certainly to be congratulated on his plan of bringing out this series.

—LONDON TIMES, LITERARY SUPPLEMENT.

# GAEKWAD'S ORIENTAL SERIES.

CRITICAL EDITIONS OF UNPRINTED SANSKRIT WORKS, EDITED BY COMPETENT SCHOLARS, AND PUBLISHED BY THE CENTRAL LIBRARY, BARODA.

---

## BOOKS PUBLISHED.

1. **Kâvyamîmâṁsâ**: a work on poetics, by Râjaśekhara (880-920 A. D.): edited by C. D. Dalal, and R. Anantakrishna Sastry, 1916. Re-issue. 1924 ... ... ... ... ... ... Rs. 2-4

*This book has been set as a text-book for the Acharya Examination of the Patna University.*

The first two numbers are valuable works, and were hitherto quite unknown to me. The Introduction to *Kâvyamîmâṁsâ* is an interesting and an important contribution to our knowledge of ancient India.

(Sir) GEORGE A. GRIERSON.

2. **Naranârâyaṇânanda**: a poem on the Pauranic story of Arjuna and Krishna's rambles on Mount Girnar, by Vastupâla, Minister of King Vîradhavala of Dholka, composed between Samvat 1277 and 1287, i. e. A. D. 1221 and 1231: edited by C. D. Dalal and R. Anantakrishna Sastry. 1916 ... ... ... ... ... ... ... 1-4

3. **Tarkasaṅgraha**: a work on Philosophy (refutation of Vaiśeṣika theory of atomic creation) by Ânandajñâna or Ânandagiri, the famous commentator on S'aṅkarâchârya's Bhâshyas, who flourished in the latter half of the 13th century: edited by T. M. Tripathi, 1917 ... 2-0

4. **Pârthaparâkrama**: a drama describing Arjuna's recovery of the cows of King Virâṭa, by Prahlâdanadeva, the founder of Pâlanpur and the younger brother of the Paramara King of Chandrâvatî, (a state of Mârwâr), and a feudatory of the kings of Guzerat, who was a Yuvarâja in Samvat 1220 or A. D. 1164: edited by C. D. Dalal, 1917 ... 0-6

5. **Râṣṭrauḍhavaṁs'a**: an historical poem (Mahâkâvya) describing the history of the Bagulas of Mayûragiri, from Râshṭrauḍha, king of Kanauj and the originator of the dynasty, to Nârâyaṇa Shah of Mayûragiri by Rudra Kavi composed in S'aka 1518 or A. D. 1596: edited by Pandit Embar Krishnamacharya with Introduction by C. D. Dalal, 1917. ... ... ... ... ... ... ... 1-12

6. **Liṅgânus'âsana**: on Grammar, by Vâmana, who lived between the last quarter of the 8th century and the first quarter of the 9th century: edited by C. D. Dalal, 1918 ... ... ... ... 0-8

7. **Vasantavilâsa**: an historical poem ( Mahâkâvya ) describing the life of Vastupâla and the history of Guzerat, by Bâlachandrasûri, (from Modheraka or Modhera in Kadi Prant, Baroda State), contemporary of Vastupâla, composed after his death for his son in Samvat 1296 ( A. D. 1240 ): edited by C. D. Dalal, 1917 ... ... 1-8

8. **Rûpakaṣaṭkam**: six dramas by Vatsarâja, minister of Paramardideva of Kalinjara, who lived between the 2nd half of the 12th and the 1st quarter of 13th century: edited by C. D. Dalal, 1918 ... ... 2-4

9. **Mohaparâjaya**: an allegorical drama describing the overcoming of King Moha (Temptation), or the conversion of Kumârapâla, the Chalukya King of Guzerat, to Jainism, by Yas'aḥpâla an officer of King Ajayadeva, son of Kumârapâla, who reigned from A. D. 1229 to 1232: edited by Muni Chaturvijayaji; with Introduction and Appendices by C. D. Dalal, 1918... ... ... ... ... 2-0

10. **Hammîramadamardana**: a drama glorifying the two brothers Vastupâla and Tejaḥpâla and their King Vîradhavala of Dholka, by Jayasimhasûri, pupil of Vîrasûri, and an Âchârya of the temple of Munisuvrata at Broach, composed between Saṃvat 1276 and 1286 or A. D. 1220 and 1239: edited by C. D. Dalal, 1920 ... ... 2-0

11. **Udayasundarîkathâ**: a romance (Champû, in prose and poetry) by Soḍḍhala, a contemporary of and patronised by the three brothers Chchittarâja, Nâgârjuna, and Mummuṇirâja, successive rulers of Konkan composed between A. D. 1026 and 1050: edited by C. D. Dalal and Pandit Embar Krishnamacharya. 1920 ... ... ... ... 2-4

12. **Mahâvidyâviḍambana**: a work on Nyâya Philosophy, by Bhaṭṭa Vâdîndra who lived about A. D. 1210 to 1274: edited by M. R. Telang. 1920. ... ... ... ... ... ... ... 2-4

13. **Prâcînagurjarakâvysaṅgraha**: a collection of old Gujarati poems dating from 12th to 15th centuries A. D: edited by C. D. Dalal. 1920. ... ... ... ... ... ... ... ... 2-4

14. **Kumârapâlapratibodha**: a biographical work in Prâkṛta, by Somaprabhâchârya composed in Saṁvat 1241 or A. D. 1195: edited by Muni Jinavijayaji. 1920 ... ... ... ... ... 7-8

15. **Gaṇakârikâ**: a work on Philosophy ( Pâs'upata School ) by Bhâsarvajña who lived in the 2nd half of the 10th century: edited by C. D. Dalal. 1921... ... ... ... ... ... ... ... 1-4

16. **Sangîtamakaranda**: a work on Music, by **Nârada: edited by M. R.** Telang. 1920. ... ... ... ... ... ... ... 2–0

17. **Kavîndrâcârya List**: List of Sanskrit works in the collection of Kavîndrâcârya, a Benares Pandit (1656 A.D): edited by R. Anantakrishna Sastry, with a foreword by Dr. Ganganatha Jha. 1921. 0–12

18. **Vârâhagṛhyasûtra**: Vedic ritual (domestic) of the Yajurveda: edited by Dr. R. Shamasastry. 1920 ... ... ... ... 0–12

19. **Lekhapaddhati**: a collection of models of state and private documents, dating from 8th to 15th centuries A. D.: edited by C. D. Dalal and G. K. Shrigondekar. 1925 ... ... ... ... ... 2—0

*Lekhapaddhati* opens a new line; we know almost nothing on the art of writing letters in Ancient India. —SYLVAIN LEVI.

This unique work has been edited very ably by the second Editor with an interesting preface, five appendices, a list of important persons and of prominent places, and a full Anglo-Sanskrit glossary. It contains numerous original specimens of all kinds of letters, deeds and documents in Sanskrit, and also quotations from the classical authors. It contains also many vernacular words and phrases, most of which are now obsolete. In order to ascertain the meaning of these obsolete words the learned second Editor had to travel over districts and to mix freely with the villagers. Thanks to his untiring zeal, we have at last been presented with a fairly good glossary which clears up the meaning of most of these terms which have hitherto baffled the endeavours of many an erudite scholar... Like many other works on letter-writing in other languages, it is by no means a dry work, but is interspersed with humorous touches. This had really added to the importance of the book.

—CALCUTTA REVIEW.

20. **Bhavişayattakahâ or Pañcamîkahâ**: a romance in Apabhraṁs'a language by Dhanapâla (*circa* 12th century): edited by C. D. Dalal, and Dr. P. D. Gune, 1923 ... ... ... ... ... ... 6–0

A very useful and valuable contribution of that exceedingly important and still imperfectly known stage of linguistic evolution which linked the older Prâkṛts to the modern vernaculars. —J. R. A. S.

21. **A Descriptive Catalogue of the Palm-leaf and Important Paper MSS. in the Bhandars at Jessalmere,** compiled by C. D. Dalal, and edited by L. B. Gandhi. 1924 ... ... ... ... ... 3–4

The editor has added an introduction of 70 pages on the most important works, together with indices of titles, authors and other points of interest. The book is an important addition to the bibliography of Prâkṛt and Sanskrit.

—J. R. A. S.

22, 23. **Paras'urâmakalpsûtra**: a work on Tantra, with commentary by Râmes'vara and Paddhati by Umânanda: edited by A. Mahadeva Sastry, B. A. 2 vols. 1923. ... ... ... ... ... 11-0

24. **Tantrarahasya**: a work on the Prâbhâkara School of Pûrvamîmâṁsâ, by Râmânujâchârya: edited by Dr. R. Shamasastry. 1923. ... 1-8

Throw considerable light upon the arcana of their subject, and are adequately edited with an introduction by Dr. R. Sama Sastry. —J. R. A. S.

25, 32. **Samarâṅgaṇa**: a work on Architecture, town-planning and engineering, by king Bhoja of Dhara (11th century): edited by Mahamahopadhyâya T. Gaṇapati Sastry, Ph. D. 2 vols, 1924-1925.... 10-0

Mahamahopadhyaya T. Gaṇapati Sastri's edition of King Bhoja's rare book on architecture will be highly appreciated by all Sanskrit scholars.

—M. Winternitz.

The work treats in detail of the selection of sites, of the planning of towns and villages, the building of houses, halls and palaces, stables for elephants and horses, the construction of various machines etc.

—Vienna Oriental Journal.

26. **Sâdhanamâlâ**: a Buddhist Tantric text of rituals, dated 1165 A. D. consisting of more than 300 small works composed by distinguished writers: edited by Benoytosh Bhattacharyya, M. A., Ph. D. 2 vols, vol. I. 1925. ... ... ... ... ... ... ... ... 5-0

The issue is one of great importance and I feel sure that the edition will be most warmly welcomed. ... This is an important addition to our materials for the study of Buddhist Iconography and that special development of Buddhism which the text illustrates so abundantly. —Johan Van Manen.

The editor has well accomplished his task and deserves praise. The edition is in no way inferior, if not superior, to many of the European and Asiatic editions of the Buddhist Sanskrit works.

—Indian Historical Quarterly.

The edition evinces painstaking critical care, is a valuable contribution to the Buddhist Iconography and would be welcome also by the specialist.
—JOURNAL OF THE BIHAR & ORISSA RESEARCH SOCIETY.

Iconographic interest apart, the *Sâdhanamâlâ* presents philological and historical problems of great importance. —MODERN REVIEW.

*Sâdhanamâlâ* is particularly important for any scholar engaged in Buddhist researches. —SYLVAIN LEVI.

The work is in the mixed Sanskrit of the Buddhists similar to that used in *Lalitavistara*, etc. A very vivid picture is thrown in these 170 Sâdhanas on one section of the Buddhist society that had already introduced into itself the prohibited intricacies of idol-worship. It further gives an insight into the development of the Vajrayâna system of Buddhist philosophy, which is so little known to the oriental scholars dealing with Buddhism. Our hearty thanks are due to the publishers for the high class printing and exquisite get-up of the volume. —CALCUTTA REVIEW.

27. **A Descriptive Catalogue of MSS. in the Central Library, Baroda.** Vol. 1 (Veda, Vedalakṣaṇa and Upaniṣads), compiled by G. K. Shrigondekar, M. A. and K. S. Ramaswami Sastry. 1925. ... 6-0

The Catalogue of MSS is particularly welcome. I am looking forward with keen interest to the following parts of the Catalogue. —M. WINTERNITZ.

Describes 543 Vedic works running to 1120 manuscripts, excellently arranged and classified. —MODERN REVIEW.

28. **Mânasollâsa or Abhilaṣitârthacintâmaṇi**: an encyclopædic work divided into one hundred chapters, treating of one hundred different topics by Somes'varadeva, a Chalukya king of the 12th century: edited by G. K. Shrigondekar, M. A., 2 vols. vol. I. 1925. ... 2-8

*Mânasollâsa* on account of its encyclopædic character ought to be consulted by all scholars. —SYLVAIN LEVI.

A voluminous treatise consists of five sections, each comprising 20 chapters. These are concerned respectively with the means of acquiring the kingdom and preserving the same, and the description of the royal enjoyments, recreations and games. We await the publication of the second volume with great interest. —INDIAN HISTORICAL QUARTERLY.

Stupendous work extending to about 8000 Granthas and divided into 100 chapters...palpably an encyclopædic summary of all the available works on...technical sciences. —MODERN REVIEW.

The work treats of many subjects and gives the maximum information in minimum space. To be brief, we can unhesitatingly designate it as the true Encyclopaedia of the Sanskrit language; in fact our author calls it the Jagadâcâryapustaka... The get-up of the book is good. —CALCUTTA REVIEW.

29. **Nalavilâsa**: a drama by Râmchandrasûri, pupil of Hemachandrasûri, describing the Paurâṇik story of Nala and Damayantî: edited by G. K. Shrigondekar and L. B. Gandhi 1626. ... ... ... 2-4

30, 31. **Tattvasaṅgraha**: a Buddhist philosophical work of the 8th century by S'ântarakṣita, a Professor at Nâlandâ with Pañjikâ (commentary) by his disciple Kamalas'ila, also a Professor in Nâlandâ (about 750 A. D.): edited by Pandit Embar Krishnamâchârya with an English Foreword by Dr. B. Bhattacharyya, M. A., Ph. D. 2 vols. 1926.... ... ... ... ... ... ... ... ... 24-0

33, 34. **Mirat-i-Ahmadi** with its Khatimae or Supplement: By Ali Mahammad Khan, the last Moghul Dewan of Gujarat: edited in the original Persian by Syed Nawabali, Professor of Persian, Baroda College, 2 vols. (Vol. I in the Press), Vol. II. ready about December 1926 ... 12-0

35. **Mânavagṛhyasûtra**: a work on Vedic ritual (domestic) of the Yajurveda with the Bhâshya of Ashṭâvakra: edited by Pandit Ramakrishna Harshaji S'âstrî, with a preface by Prof. B. C. Lele. SHORTLY.

## BOOKS IN THE PRESS.

1. **Nyâyapraves'a**: the earliest work on Buddhist logic, by Diṅnâga, with commentaries of Haribhadrasûri and Pârs'vadeva: edited by A. B. Dhruva, M. A., LL. B., Pro-Vice-Chancellor of the Hindu University, Benares and Pandit Vidhusekhara Bhattacharyya.

2. **Sâdnanamâlâ**: Vol. II., edited by Benoytosh Bhattâchâryya, Ph. D. General Editor, Gaekwad's Oriental Series. Illustrated.

3. **Nâtyas'âstra**: on dramaturgy, by Bharata with commentary by Abhinavagupta of Kashmir: edited by M. Ramakrishna Kavi, Illustrated. 4 vols. VOL. I SHORTLY.

4. **Kalpadrumakos'a**: standard work on Sanskrit Lexicography by Kes'ava: edited by Pandit Ramavatara Sarma Sahityacharya of Patna.

5. **Advayavajrasaṅgraha**: consisting of twenty short works on Buddhist philosophy by Advayavajra, a Buddhist savant belonging to the 11th century A. D.: edited by Mahâmahopâdhyâya Dr. Haraprasad Shastri, M. A., C. I. E. Hon. D. Litt.

6. **Apabhraṁs'akâvyatrayî**: consisting of three works, the Carcarî, Upades'arasâyana and Kâlasvarūpakulaka, by Jinadatta Sûri (12th century) with commentaries: edited by L. B. Gandhi.

7. **Mânasollâsa** or Abhilaṣitârthacintamaṇi, Vol. II., edited by G. K. Shrigondekar, M. A.

8. **A Descriptive Catalogue** of MSS in the Central Library, Baroda Vol. II (S'rauta, Dharma and Gṛhya Sûtras) compiled by the Library staff.

9. **A Descriptive Catalogue of MSS in the Jain Bhandars at Pattan** edited from the notes of the late Mr. C. D. Dalal, by Pandit L. B. Gandhi. 2 vols.

10. **Bhâvaprakâs'ana** of S'âradatanaya: an ancient work on Dramaturgy; edited by Pandit Ramaswami Sastry, Central Library, Baroda and His Holiness Yadugiri Yatiraja Swami, Melkot.

11. **Prajñopâyavinis'cayasiddhi** of Anaṅgavajra and **Jñânasiddhi** of Indrabhûti: two important works belonging to the little known Vajrayâna school of Buddhism (8th century A. D.): edited by Benoytosh Bhattacharyya, Ph. D., General Editor, Gaekwad's Oriental Series.

* * * * * *

**The Baroda Library Handbook.** By Newton Mohun Dutt, Curator of Libraries, Baroda State. With Introduction by H. E. the Dewan of Baroda. 84 pages royal 8vo. 15 illustrations. Bibliography. 1926 ... ...Re. 1–0

For the British provinces and the Indian States where the library movement is in its infancy, or is non-existent, this *Handbook* will be helpful, suggestive and stimulating. —*Bombay Chronicle*, 14. 3. 26.